त१.२.५.६.७-म६; श्वापदश्चमृगालादिः–म१.७। श्वापदश्च शृगालादिः–म४-मॅ॥ —तै. आ. ६.४.२ अत्र ‘विश्वात् सर्वस्मादुपद्रवात्’ इति पञ्चम्यन्तं व्याख्यातम्॥ २२ [७] च सं—ग-त३-म१.२.४.५। व सं–त; च-म६.७। मांसेन च सं–मु। मांसेन–मॅ। ‘मेदसा’ इत्यस्य ‘मांसेन’ इति व्याख्यानमबद्धम्॥ २५ लेस्याडागमः—ग-त-म१.२.४। लेस्यडागमः–म६.७-मॅ-मु॥ ३२१. ६ [८] हव्यैः कव्यैश्च—ग-त३.४-म२.६-मु। दद्यैः कव्यैश्च–म५। हव्यैश्च–म१.४.७-मॅ॥ १५ [९] अयं—म१.२.४.७-उद्गीथ। अथ–मॅ-मु-त-म६॥ शान्तिकर्मार्थमुपादत्तः। शान्तिकर्मार्थमुपात्तः–उद्गीथ। शांतिकर्मार्थमुपासतः–त४-म१.२.४.७; शान्तिकर्मार्थमुपासनः–त१.२.५.६.७-मॅ-मु। ‘उत्तरेण शान्तिकर्मार्थमादत्ते’ इति उपर्युक्तम्। तदनुकूलोऽयं पाठोऽभ्यूहितः। उद्गीथोऽपि तमुपोद्बलयति॥ ३२२. ३ [११] ‘कव्यवाहनः’ इति संहितापाठः। बहुषु पुस्तकेषु वर्तमानत्वात् ‘कव्यवाहनः’ इत्येव सायणपाठः। आश्व श्रौ. पाठोऽपि तथैव॥ ५. वोचतु। ‘वोचति’ इति संहितापाठः॥ १५ [१२] किमर्थं—ग-त३.४-म६-उद्गीथ। एतन्नास्ति त१.२.५.६.७-म१.२.४-मॅ-मु-पुस्तकेषु॥

[१०. १७] ३२४. २५ [४] परि पासति परि पातु—*मॅ-मु-उद्गीथ। परि पासतु परिपासि–त; परिपासति–त३; परिपासि–त७-म१.२.४; परिपासतु परि पाति–म६॥ ३२७. २१ [११] यद्वा। द्रप्सः–त-म१.२.४.६-मु। यद्वा–म७-मॅ॥

[१०. १८] ३३०. १८ [५] पूर्वंपूर्वं—*मॅ। पूर्वं–§-मु॥ ३३१. २३ [८] अनुमरण°—*मॅ। अनुसरण°–त-म१.२.४-मु; अनुसरण°–म६.७॥ ३३२. ४ [९] संघर्षयितॄन्—म१.४। संघर्षयितृन्–म७। संघर्षयित्रीन्–त-मॅ-मु॥ १३ [१०] अत्र भाष्यादौ संबोधनं न दृश्यते। उद्गीथभाष्ये ‘हे अस्थिकुंभ’ इति प्रारम्भः॥ ३३३. ७ [१२] संपरिवार्य—§-मु-उद्गीथ। तं संपरिवार्य–मॅ॥ ८. ते पांसवः—म४-*मॅ-मु उद्गीथ। तेपांसवा–त१.२.५.६.७-म२.६; ते पार्थिवा–त४॥ २२ [१४] त७-मु-पुस्तकयोरस्य मन्त्रस्य समानं भाष्यमधष्टिप्पण्यां दत्तमेव। अन्येष्वेतद्भाष्यं लुप्तम्। अस्य मन्त्रस्य समग्रमुद्गीथभाष्यमुपलभ्यते तदधो दीयते–

प्रतीचीने प्रतिगते संप्राप्ते अहनि अस्थिसंचयनदिवसे मामस्थिकुम्भरूपं यजमानमादधुः त्वयि भूमावाहितवन्तः पुत्रपौत्रादयोऽधिकृतवन्तः। किमिहाभिहितवन्तः। इष्वाः पर्णमिव। यथा केचिदिषुकाराः इष्वाः संबन्धि पर्णं वाजाख्यं सुश्लिष्टमिषावादधति एवमेतज्ज्ञात्वा प्रतीचीं त्वां प्रतिगतां प्रार्थनाद्वारेण त्वत्कर्णपथं प्राप्तां वाचं प्रार्थनारूपाम् ‘एषा त्वा पातु निर्ऋतेरुपस्थात्’ (ऋ. सं. १०.१८.१०) ‘उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना’ (ऋ. सं. १०.१८.११) इत्यादिकामचिकृतसत्कारां जग्रभ गृहाण। किमिव। अश्वं रशनया रज्ज्वा यथा कश्चित् गृह्णीयादेवं गृहाण कर्तव्यत्वेन मनसि कुर्वित्यर्थः। अथवा मृतस्य पुत्रो ब्रवीति। प्रतीचीने प्रतिगते अद्याहनि मां मृतस्य पुत्रमा दधुः श्मशानकर्मणि कर्तव्ये महतादरेण श्लिष्टमाहितवन्तः अधिकृतवन्त ऋत्विगादयः स्मृतिकारा वा। किमिवा दधुः। इष्वाः संबन्धि पर्णं वाजाख्यं यथा केचिदिषुकाराः पर्णं सुश्लिष्टमिषावादधति एवमेतज्ज्ञात्वा पृथिवी प्रतीचीं प्रार्थनाद्वारेण त्वत्कर्णपथं प्राप्तां वाचं प्रार्थनारूपाम् ‘एषा त्वा पातु निर्ऋतेरुपस्थात्’ ‘उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः’ इत्यादिकां जग्रभ गृहाण कर्तव्यत्वेन। किमिव। अश्वं रशनया यथा कश्चित् गृह्णात्येवम्॥

[ १०. १९ ] ३३६. १६ [ १ ] सेचयत । अवगाहनगोदोहन°—त३ । सेवत अवगाहनगोदोहन°–ग; मेवयत अवगाहत गोदोहन°–त५ । सेचयत अवगाहन°–भ१.२.४ । सेवयत अवगाहत मानु गात अस्मद्व्यतिरिक्तं यजमानं मा गच्छत गोदोहन°–त१.२.६.७ । एतेषु उपरितना भाष्यपङ्क्तिः मध्ये प्रविष्टा । सेवयत अवगाहन°–भ६; सचयत अवमाहन°–भ७ । सेचयत अवगाहत गोदोहन°–त४-*मॅ-मु । 'सेचयत' इत्यस्य 'अवगाहत' इति पुनर्व्याख्यानं नोचितम् । तथा च गाह्धातुरात्मनेपदी । 'अवगाहध्वम्' इति भाष्यम् । बहुषु पुस्तकेषु 'अवगाहन' इति भावात् 'त' स्थाने 'न' एव पठनीयः । वाहनदोहन°–उद्गीथ ॥ १७ आच्छादयितारौ हे अग्नीषोमा अग्नीषोमौ—त३-४-भ६-मु । आच्छादयितारौ–त१.२.५.६.७-भ१.२.४.७-मॅ ॥ ३३५. ४ [ ३ ] सास्नादिमतीनां—ग-त३-भ२-*मॅ-मु-उद्गीथ । सास्वादिमतीनां–त१.२.४.५.६; सास्वाद्यादिमतीनां–त७; सास्न्यादिमतीनां–भ१.४; सस्त्यादिप्रतीनो–भ७ ॥ वृष्टिलक्षणानामपां । 'अपां वा वृष्टिलक्षणानाम्' इत्युद्गीथभाष्यपाठः साधीयान् ॥ १५ [ ४ ] 'संज्ञानं यत्परायणं आवर्तनम्' इति पदत्रयस्य व्याख्यानं लुप्तम् । उद्गीथभाष्ये उपलभ्यते तद्यथा— यदपि गवां संज्ञानं । सम्यग्ज्ञायतेऽनेनेति संज्ञानम् । शबलादिचिह्नं नाम वा । तदपि प्रार्थये । यदपि गवां परायणं परागमनं चरित्रं वनं प्रति गमनं तदपि प्रार्थये । यदपि गवामावर्तनं वने चरितुमितश्चेतश्च प्रवर्तनं तदपि प्रार्थये ॥

[ १०. २० ] ३३७. १ [ १ ] उद्गीथमते 'भद्रं नो अपि वातय मनः' इति मन्त्रस्यानन्तरं सप्तमाष्टकस्य प्रथमोऽध्यायः समाप्तः 'अग्निमीळे' इति मन्त्रेण च नवीनं सूक्तमध्यायश्च प्रारब्धः ॥ १४ [ २ ] स्वरित्ययं सर्वशब्दो निपातः । अशुद्धः प्रयोगः ॥ ३३९. २० [ १० ] किंचिद्देयमस्ति—ग-त३-भ१.२.४.६-*मॅ-मु । किंचिद्देवं यमस्ति–त१.२.४.५.६; किंचिद्देयं यमस्ति–त७; किंचिदेयमस्ति–भ७ ॥

[ १०. २१ ] ३४०. १९ [ ३ ] आसते उपासते—भ । आसते–त-मॅ-मु ॥

[ १०. २२ ] ३४३. ८ [ ३ ] आङ् मर्यादायाम् । आ समाप्तेः—*मॅ-मु । आमर्यादया ( अमर्यादया–त६ ) असमाप्तः–ग-त३.४.५.६-भ६-उद्गीथ; असमाप्तः–त१.२; अमर्यादया असुजमाप्तः–त७; आ मर्यादया आ समाप्तेः–भ१.२.४; आङ् मर्यादायां असमाप्तः–भ५; आ मर्यादायां आ समाप्तेः–भ७॥ ३४५. २३ [ ११ ] क्षिप्रकरण°—ग-त४ । क्षिप्रकारण°—त१.२.५.६-मॅ-मु । क्षिप्रकरणे युक्तानीत्यर्थः–उद्गीथ ॥ ३४६. २ [ १२ ] कुध्न्यक्—त-मॅ-मु । अकुध्न्यक्–भ७-उद्गीथ । अंकुध्न्यक्–भ१.४ । 'अकुध्न्यक्' इति संहिता ॥ ११ [ १३ ] सन्त्विति निर्देशविशेषणत्वात्—ग । सनि निर्देशमाविशेषणत्वात्–त; सति निर्देशविशेषणत्वात्–त३-भ१.२.४.७; बहुवचननिर्देशविशेषणत्वात्–भ६ । सति निर्देशस्याविशेषणत्वात्–मॅ । सनि निर्देशस्याविशेषणत्वात्–मु । स्तुतिनिर्देशविशेषत्वात्–उद्गीथ ॥

[ १०. २३ ] ३४७. ३० [ २ ] मघवा—ग-त३-भ१.२.४-मु । अथवा–त-भ६ । मघवान्–मॅ ॥ ३४८. ९ [ ३ ] वहतः—§-मॅ । वि वहतः–मु ॥ ३४९. १ [ ५ ] वर्धयति–§-उद्गीथ । ववृधे वर्धयति–मॅ-मु । 'ववृधे' इति प्रतीकस्य अग्रे वर्तमानत्वात् पुनर्ग्रहणमनावश्यकम् ॥ २० [ ७ ] केचिदपि—§-मु-उद्गीथ । क्वाचिदपि–मॅ । पुस्तकेष्वनुपलभ्यमानः पाठः मॅक्समुलर-

महाशयैः कुतो गृहीतः ? मुद्रणदोषो वा ? केचित्–उद्गीथ ॥ २१ प्रमतिं प्रकृष्टां मतिं—त१.२.६. ७-मु-उद्गीथ । प्रकृष्टमतिं-ग-त३.४-भ५-६; प्रकृष्टामतिं–भ१.२.४ । प्रमतिं–भ७-मॅ ॥

[ १०. २४ ] ३५१. ४ [ ४ ] ईळिता ईळितौ—ग-भ-मु । ईळितौ–त-मॅ ॥

[ १०. २५ ] ३५४. ९ [ ७ ] प्राथ्यसे—त-मु-उद्गीथ । प्रार्थ्यते–भ-मॅ ॥ २५ [ ९ ] तस्मिन् । अतिमहतीत्यर्थः—*मॅ-मु । तस्मिन् सतीत्यर्थः–ग; तस्मिन् सतिमहतीत्यर्थः–त-भ६; तस्मिन् सर्वति महतीत्यर्थः–त३-भ१.४; तस्मिन् सर्वाणि महतीत्यर्थः–भ७ ॥ ३५५. ६ [ १० ] वर्धयेदित्यर्थः—भ । अवर्धयदित्यर्थः–त-मॅ-मु । वर्धयत्विति शेषः–उद्गीथ ॥

[ १०. २६ ] ३५६. २० [ ४ ] परिचर्याद्वारेण—मु । परिचर्यादावादरेण-ग; परिचर्यादा-त१.२.६.७; परिचर्यादारणं–त४.५-भ२; परिचर्याद्वारण–त३-भ१.४; परिचर्याचरणं–भ६ । परिचर्यादरेण–भ७-मॅ । परिचर्यात्यादरेण–उद्गीथ ॥ २५ [ ५ ] रथानामश्वहयः । हयतिर्गतिकर्मा । रथानां संबन्धिभिः—मॅ । रथानां संबंधिभिः अश्वहयः हयतिर्गतिकर्मा–§-मु । उद्गीथभाष्यपाठः मॅ-पाठं द्रढयति॥ ३५७.१६. [७] वि अदूधोत्—§–मॅ । वि दूधोत्–मु संहितायां च॥

[ १०. २७ ] ३५८. २३. [ २ ] यत् यदा अहमित् अहमेव—त३.४-भ६-मु । अहमिदहमेव–ग; यद्यदाहमित्य अहमेव–त१.२.५.६.७; यद्यदा अहमेव–भ१.२.४ । यदीद्यदाहमेव–मॅ । 'यदि' इत्यस्य स्थाने 'यत्' इति भाष्यकारैः पठितमित्येव मन्तुमुचितम् ॥ ३५९.१६. [ ४ ] शरीरशस्त्रास्त्रबलादिभिः । शरीरशस्त्राबलादिभिः–भ१;शरीराशस्त्राबलादिभिः–भ४; शरीरशस्त्रबालादिभिः–भ७; शरीरशस्त्रास्त्रेषुबलादिभिः–भ६; शारीरशस्त्रास्त्रबलतः–उद्गीथ; शरीरवस्त्रास्त्रबलादिभिः–त-मॅ-मु॥२६ [५] वै उ इत्येवैव–भ१.४-*मॅ । वै उ इत्येतैव–मु बहुषु पुस्तकेषु च ॥ ३६०. १७ [ ७ ] मध्यमपुरुषेनेन्द्रस्यो°—भ७-मु । मध्यमपुरुषेंद्रस्यो°–त-भ१.२.४; मध्यमपुरुषस्येंद्रस्यो°–भ६ । मध्यमपुरुषत्वेनेंद्रस्यो°–मॅ । मध्यमपुरुषेण प्रथमपुरुषेण च–उद्गीथ ॥ ३६०. २९. [ ७ ] गच्छंत्यौ— *मॅ । गंत्यौ ( गंत्र्यौ–ग-त-४.६-भ५; गच्छंत्यौ–भ६ ) यद्वा सर्वस्य प्रकर्षेणाच्छादयित्र्यौ रेफश्छांदसः (रेफलोपश्छांदसः–भ६-मु)–ग-त-भ मु॥ ३६१. ११. [ ८ ] दुदुह्रे—*मॅ । दुदुहु–ग; दुह्रदि–त१.२.५.६; दुह्र–त३.४-भ१.२.४.६; दुह्र–भ७ । दुह्रे–मु ॥ १२. [ ९ ] त७-मु-पुस्तकयोरुपलभ्यमानं नवममन्त्रभाष्यमधष्टिप्पण्यामुद्धृतमेव । इतरपुस्तकेष्वेतन्मन्त्रभाष्यं लुप्तम् । उद्गीथभाष्य उपलभ्यमानमस्य मन्त्रस्य भाष्यमधो दीयते—

'पुरुष एवेदं सर्वं ' ( ऋ. सं. १०. ९०. २ ) 'सर्वं खल्विदं ब्रह्म ' ( छां. उ. ३.१४.१) इत्यादिवचनात् कारणात्मनः सर्वात्मकत्वादहमेव सम्यक् ज्ञानयोगात् कारणात्मरूपेण स्थित्वा स्थावरजंगमलक्षणं यद्यत् द्विपाच्चतुष्पादादिकं च सर्वमुत्पादयामीति कारणात्मरूपेणात्मानमिन्द्रः स्तौति।जनानां सर्वप्राणिनां यदत्तव्यं यवसं यवाद्यन्नं च तस्य सर्वस्य यवसस्य यवाद्यन्नस्य च वयमेव सम्यगत्तारो द्विपदचतुष्पदादीनां कार्यरूपेण स्थितत्वादहमेव कारणरूपेण स्थित्वा सर्वस्य यवादिकान्नस्यात्ता । क स्थितः सन्नत्ता त्वमुच्यते–उरुअज्रे अन्तः । उरु विस्तरेण । अज गतिक्षेपणयोः । अन्तरिति समिप्यवचनः । विस्तीर्णस्य जनस्य गमनस्य जगतो मध्ये स्थितः सन्नत्तास्मीत्यर्थः । ' अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ' ( भगवद्गीता ६. ४५ ) इति वचनान्मोक्षस्य दुष्प्रापत्वात् । अत्रास्मिन्नेव जन्मनि

अवसातारं संसारान्तस्य कर्तारं मोक्षं गमयितारं मामेव इच्छात् आराधयितुमिच्छति । कः । योगीन्द्र एव संसारसागरादुद्धर्ता नान्य इति परया भक्त्या योऽयमाराधयति योगेन तमहमस्मिन्नेव जन्मनि संसारान्मोचयामीत्यर्थः । अथो अपि च अयुक्तमयोगिनं युनजत् । उत्तमस्य स्थाने प्रथमोऽयम् । युनज्म्यात्मना संसारान्मोचयामीत्यर्थः । ववन्वान् संभजन्नहं यदि कामयेयमित्यर्थः ॥ २२. [ १० ] उत्पादयानीति त्वं जानीहि—ग-भ५। उत्पादयानीति–त-भ१.२.४; उत्पादयामीति त्वं जानीहि–त३-भ६; उत्पादयामीति–त४-मॅ-मु। उत्पादयानीति जानीहि त्वं–उद्गीथ । यत्स्थावरजंगमात्मकं जगत् तदहं संसृजानि उत्पादयानीत्यर्थः ॥ ३६२. २४. [१२] अवस्थितमिति । 'अवस्थितमपि' इति भाव्यमिति प्रतिभाति ॥ ३६३. १३. [१४] पराशदनवार्जितः—त२-मॅ-मु-उद्गीथ । मॅ-पुस्तकेऽयं पाठो मु-पुस्तकानुसारेण स्वीकृतः ॥ ३६४. १ [१५] तिरन्ति—ग-भ६-*मॅ-मु । तरं–त; तरंति–भ ॥ ४. तिरन्ति—*मॅ-मु । तरंति–त-भ ॥ १४. [ १६ ] तत्र—*मॅ । गति°–त-भ; गर्भ°–भ१(२) । गर्भवासं–उद्गीथ ॥ २२. [ १७ ] पक्कवन्तो—§-मॅ-मु । ऋ. सं. ६.२०.१३ भाष्ये 'पक्कवान्' इति पाठोऽस्माभिरभ्यूह्य स्वीकृतः । सोऽनेन प्रमाणितः ॥ ३६५. ८. [ १८ ] वनति–त-भ१.२.४.७-मु-उद्गीथ । वनते–भ६ । वनुते-मॅ ॥ १३. [ १९ ] भूतसंघं–त-भ-मु । ग्रामभूतं संघं–मॅ । भूतसंघातं–उद्गीथ ॥ १७. युगा युगानि–ग-त३-भ६-*मॅ-उद्गीथ । युगा युग्मानि–त-भ१.२.४.७–मु ॥ २५. [ २० ] अभेदोपचारात्—भ१( २ ) । उपचारात्–त-भ-मॅ-मु । एकत्वोपचारात्–उद्गीथ ॥ २६. युक्तौ रथे नियुक्तौ —ग-त३-भ५.६ । युक्तौ–त-भ१.२.४.७-मॅ-मु ॥ सु सुष्ठु—भ६ । सुष्ठु–त-भ१.२.४.७-मॅ-मु ॥ सुष्ठु अभिपूजितौ-उद्गीथ । 'सुष्ठु पूजितौ' इत्यस्य स्थाने 'सुष्ठु योजितौ' इति पाठो 'युक्तौ' इति पदस्य व्याख्यानत्वेन मॅक्समुल्लरमहाशयैः सूचितः । परं 'सुष्ठु पूजितौ' इति 'सु' इति पदस्य व्याख्यानम् । 'युक्तौ' इति पदस्य व्याख्यानमुपर्यागतमेव । 'युक्तौ' इत्यस्य 'सुष्ठु योजितौ' इति व्याख्यानाभ्युपगमे 'सुष्ठु' इति पदं 'योजितौ' इति णिजन्तं रूपं चोभयमप्यनावश्यकम् ॥ ३६७. ३. [ २३ ] प्रीणयितृ पूरयितृ वा—ग-त३-भ५.६-उद्गीथ । प्रीणयितृ–त-भ१.४-मॅ । पालयितृ प्रीणयितृ वा–मु ।

[ १०.२८ ] ३६७. २३. शेषा । शिष्टा–अनु ॥ ३६८.२६. [ ४ ] अत्सारीन्—*मॅ । अत्सान्–ग; अत्सात्–त१.२.४.५.७-भ-मु;सत्यात्–त६॥ २७ अतिगहनदेशात्—*मॅ-मु । निमर्जनदेशात्–ग; अभिहनदेशात्–त-भ६; निर्गहनदेशात्–भ१.२.४.७। गहनं देशात्-उद्गीथ॥ ३६९. २८. [ ७ ] मेघमसुरं वा–भ६-मु । मेघासुरं वा–त-भ१.२.४.७ । मेघासुरं–मॅ । वृत्रमसुरं मेघं–उद्गीथ ॥ ३७०.१६. [ ९ ] बलवत्क्रूरशूरमृग°—भ१.२.४.७-उद्गीथ । बलवत्क्रूरस्यमृग°–त । बलवत्क्रूरमृग°–ग-भ६-*मॅ-मु ॥ २७. [ १० ] करस्योपरि—§-मॅ-मु । पञ्जरस्य परि–उद्गीथ ॥

[ १०. २९. ] ३७२.९. [१] एवं तावत्—भ६-मु । एव तावत्–त१.२.५.६.७–भ२; एता एतावत्–त४ । एतावत्–मॅ ॥ ३७३.२. [ २ ] स रथः कुत्सेन कुत्सो—*मॅ । स रथः कुत्सेर–ग; स रथः कुत्सो–त१.२.४.५.६-भ६; रथः कुत्सो–त७; स रथः कुत्सेन–भ१.२.४.७। तं रथं कुत्सो–मु ॥ १३. [ ३ ] सर्वार्थदर्शिनी—भ१.४.७ । सर्वार्थदर्शनीय–त४ (प्रान्ते )। त–पुस्तकेषु भाष्यांशो लुप्तः । सर्वार्थदर्शना–मॅ-मु । सर्वार्थदर्शनी–उद्गीथ ॥ १५. वयं...शक्यां... संगमयेयम् (?)–§-मॅ-मु । उद्गीथभाष्ये 'वयं' नास्ति ॥ ३७४. १७. [ ६ ] स्वाघ्नन्—

त२.६.७–भ४.७–मॅ। स्वाद्मन् स्वादु–त४; स्वाद्मन् स्वादुयुक्ता–भ६। त५-भ१.२–पुस्तकेषु 'स्वाद्मन्' इत्यस्यानन्तरमवकाशो दत्तः। स्वाद्मन्शब्दस्य व्याख्यानमत्रापेक्षितं दृश्यते ॥ १८. **अस्माभिर्दत्ताः**—त–भ२.६। अस्माभिर्दत्तः-ग; अस्मादताः–भ१.४.७। स्वाद्मन् स्वाद्मानः स्वादिष्ठाः भवंतु अस्माभिर्दत्ताः संतु–मु। आस्वादिताः–*मॅ। स्वाद्मन्शब्दस्य व्याख्यानं लुप्तमस्तीति स्वीकरणे 'आस्वादिताः' इत्यभ्यूहोऽनावश्यकः स्यात्। बहुषु पुस्तकेषूपलभ्यमानत्वात् स्वीकृतपाठ उपपन्नः प्रतिभाति। 'मधूनि' इति पदस्य व्याख्यानं स्वीकृतपाठमेव प्रमाणयति। उद्गीथभाष्यमशुद्धमपि द्रष्टव्यम्॥ २४. [७] **अस्येन्द्रस्यार्थं**—ग–उद्गीथ। अस्येंद्रार्थे–त-भ१.२.४.६.मु; इंद्रायार्थे–भ७। इंद्रार्थे–मॅ॥ ३७५.३. [८] **इन्द्रः**—§–मु। स इंद्रः–मॅ॥

[१०. ३०] ३७५. १२. **अप इष्य**—§–मु। अपयिष्य (?)-मॅ॥ ३७६. ११. [३] **आर्थिकोऽयं**—ग-भ६-मु। अर्थिकोयं–त। स्वार्थिकोऽयं–भ१.२.४-मॅ। अर्थोऽयं–उद्गीथ॥ ३७७. २१. [७] **°वेष्टनाभिर्हिंसनात्**—*मॅ-मु। मु-पुस्तकपाठ एव मॅ–पुस्तके स्वीकृतः। °वेष्टिताभिः हिंसनात्–त-भ६; °वेष्टिताभिः हिंसात्–भ१; °विष्टिताभिः हिंसात्–भ४। °वेष्टनाभिः हिंसातः–उद्गीथ॥ ३७८. १. [८] **प्रगमयत......शृणुत**—ग-त१.२.४.६.७–भ१.२.४.६–मु। भ६–पुस्तके 'प्रगमयत' इत्यस्य स्थाने 'प्रसंगमयत', 'तैर्धनवत्यः' इत्यस्य स्थाने च 'तद्वत्यः'। त१.२.७-भ२–पुस्तकेषु 'रेवतीः' नास्ति। उत्तरार्धव्याख्यानरूपोऽयं भागः त५-मॅ–पुस्तकयोर्नास्ति। न वायं मॅक्समुल्लरमहाशयैः स्वीयेषु लिखितपुस्तकेषूपलब्धः। अस्य मन्त्रस्योद्गीथ-भाष्यमत्रोद्ध्रियते–'यच्छब्दसंबन्धाद्द्वितीये पादे ? गर्भसारः यो वः युष्माकं स्वभूतः हे सिन्धवः स्यन्दन-शीलाः मध्वः मधुनः मृष्टरसस्य उत्सः उत्स्यन्दिनः उत्सिपिता। यच्छब्दसंबन्धात् गर्भ ? मधुमन्तं मधुस्वादोपेतं ऊर्मिमप्संघातम्। घृतपृष्ठं घृतेनाज्येन पृष्ठमीडचं स्तुत्यमध्वरेषु यज्ञेषु। ईदृशं सारं युष्मत्संबन्धिनमस्मै अस्येन्द्रस्यार्थाय प्रहिणोत प्रगमयत प्रस्थापयतास्मयज्ञं प्रत्यंगभावाय। हे आपः अस्मभ्यं युष्माभिः दातव्य ? दृष्टादृष्टफललक्षणेन तद्वत्यं शृणुत हवमाह्वानं वचनमेतदित्यर्थः। मे मम स्वभूतम्'। अशुद्धमेतत्सायणभाष्यानुसारेण शोधयितुं शक्यम्। ईषद्वचनाभेदे सत्यपि स्वीकृतपाठमेतत्प्रमाणयति॥ ११. [९] **नभोजां**—ग-त७-भ६–*मॅ-मु-उद्गीथ। नभोजं–त१.२.४.५.६-भ२; नभोज–भ१.४॥ ३८०. ११. [१४] **आग्मन्**—*मॅ-मु–उद्गीथ। अग्मन्–§॥

[१०. ३१.] ३८२. ११. [४] **वाग्भिः स्तुतः**—भ२.५.६। वाग्भिः स्तुत–त३-भ-१.४। वाग्भिः–त-मॅ-मु॥ २८. [६] **सुष्टुतिः**—त६। सुष्टुस्तुतिः–मॅ-मु इतरेषु च। सुस्तुतिः–उद्गीथ॥ ३८३. १४. [८] **एतावद्देवजातं...अपि तु एना**—*मॅ-मु। तावद्देवजातं सामर्थ्येन युक्तं–ग; एतावद्देवजातं सामर्थ्येन युक्तमिति अपि तु एता–त; एताः देवा वा जातं सामर्थ्येन युक्तं भ१.४.७; एतावद्देवजातं सामर्थ्याद्युक्तं एता–त३; एतावद्देवजातं सामर्थ्येन युक्तमिति एता–भ२। न एतावत्। नैतावदेवजातं सामर्थ्ययुक्तं। किं तर्हि एता–उद्गीथ॥ ३८४. १३. [१०] **ङयादेशः**—त-भ१.२.४.६-मु। ङ्याडागमः–त३;ङ्याडागमः–भ५। ङ्यादेशः–ग-भ७-मॅ। ङयादेशे 'शम्या' इति रूपं भवेत्। अतः स्वीकृतपाठो न युक्तः। परं बहुषु पुस्तकेषूपलभ्यमानत्वात् स्वीकृतः। 'ङ्यादेशः' इति मॅ-पाठोऽबद्ध एव। 'आ–आदेशः' इति युक्तम्॥

[ १०. ३२ ] ३८५. १२. [ २ ] रजःशब्दाच्छस आकारः—भ६-*मॅ-मु। इतर-लिखितपुस्तकेष्वशुद्धाः पाठाः ॥ ३८६.४. [ ४ ] यद्यत्र—त-भ२.६-मु। यद्य—त३-भ१.४; यदा—भ७। यद्यद्रा—मॅ ॥ ६. यत आगत्य प्रकाशयेत्यत्र (प्रकाशसेत्यत्र-भ६) कारणमाह ( तारण-माह—त३-भ१.२ )—ग-त-भ-मु। यत आगत्य प्रकाशस्ततोऽत्र कारणमाह—*मॅ। स्वीकृतपाठो मॅक्स-मुल्लरमहाशयैरुपलब्धोऽपि किमर्थं त्यक्तोऽभ्यूहश्चाश्रित इति न ज्ञायते। स्वीकृतपाठ एव सम्यगर्थ-मावहति न मॅक्समुल्लरमहाशयैरभ्यूहितः पाठः ॥ ३८७. २. [ ६ ] अन्तर्हितं त्वां—ग-त३-भ। अंतर्हित्वं—त४.५। अंतर्हितं—त१.२.६.७—मॅ-मु ॥ ३८८.५. [९] हे कलश कलावन्—भ६-मु। हे कलश कलावान्—त१.२.६.७; हे कलश कलाशन्—त३.४.५; हे कलश कलशान्—भ१.२.४। हे कलश—भ७-मॅ। हे कलश कलाशयन सर्वकलाधारपरिपूर्ण—उद्गीथ ॥ १३. [ ९ ] बहुवचनम्। एवं—त३.४-भ५। बहुवचनं पदं—त१.२.५.६—मु; बहुवचनं पदा—त७; बहुवचनं—ग-भ१.४.६। बहुवचनपदं-मॅ ॥

[ १०. ३३ ] ३८९. १२. [ २ ] पार्श्वास्थीनि—ग-भ१.२.४-*मॅ-मु। पार्श्वस्थानि—त; पार्श्वस्थीनि—भ६; पार्श्वास्थानि—भ७ ॥ १६. कम्पयते ( २ )। 'कम्पते' इति साधु ॥ ३९०.८. [ ५ ] प्रष्टिवाहिनं रथं—*मॅ। तिष्टिवाहिनं रथं—ग; प्रतिष्ठवाहिनं ( प्रतिष्ठ°—त५ ) रथं च—त१.४.५.६.७; प्रतिष्ठवाहिनं रथं—भ१.२.४.७; प्रतिष्ठावाहिनं तं रथं च—भ६। प्रष्टिवाहिनं रथं च—मु ॥ २९. [ ९ ] न जीवति—त-भ६-मु। जीवति—भ१.२.४.७-मॅ ॥

[ १०. ३४ ] ३९१. २. अत्र द्वादश्यक्षान् स्तौति......सा देवता—*मॅ। अयं पाठो मॅक्मुल्लरमहाशयैरभ्यूहितः। अभ्यूहे कारणान्यपि तैः स्वकीयटिप्पण्यां प्रदर्शितानि। लिखित-पुस्तकेषु साधारण्येनैतादृशः पाठो विद्यते—'अत्र द्वादश्याक्षान्स्तौति नवम्याद्यावातस्तास्तद्देवत्यः सप्तमी त्रयोदशी च कृषिं स्तौति अतस्तयोः सा देवता'। बृहद्देवतापाठस्त्वेवं वर्तते—'अत्राक्षान्द्वादशी स्तौति नवम्याद्या च सप्तमी। त्रयोदशी कृषिं स्तौति......'। बृहद्देवतापाठमुद्धृत्य सूक्तदेवताः कथयितुं भाष्यकारा उद्युक्ताः। सप्तमी ऋक् न कृषिं स्तौति किंतु अक्षान् स्तौति। तथा च 'स्तौति' इति क्रियापदमेकवचनान्तम्। 'तयोः' इति पदमप्यबद्धमिति स्पष्टमेव। एतामशुद्धिं दूरीकृत्य यः पाठो मॅक्समुल्लरमहाशयैरभ्यूहितः स युक्त एव। मु-पुस्तकेऽशुद्धः पाठः ॥ १०. विभीतकस्य—ग-*मॅ-मु। विभीतकस्य—त१.२.४.५; विभीदकस्य—त७; विभीतस्य—भ१.४.७ ॥ १३. [ १ ] अचच्छदत्—ग-*मॅ-मु। अवछत्—त१.२.६; अचछत्—त४.५; अचछदत्—त७-भ ॥ ३९२. १७. [ ५ ] न दूषये—त७-*मॅ-मु। न दूये—ग; दूषये—त-भ ॥ ३९३. ५. [ ७ ] नितोदितवन्तश्च—*मॅ। नितोदितवंतश्च द्यूतपुरुषे च कृषौ प्रवर्तमानेन—त१.२.६; नितोदितवंतश्च पुरुषे च कृषौ प्रवर्तमाने—त४-मु; नितोदितवंतश्च पुरुषश्च कृषौ प्रवर्तमाने—त५; नितोदितवंतश्च द्यूतपुरुषे च कृषौ प्रवर्तमान—त७; नितोदितवंतश्च पुरुषस्य कृष्टौ प्रवर्तमाने—ग; नितोदितवंतश्च पुरुषस्य कृषौ प्रवर्तमाने—भ१.२.४; नितोदितवंतश्च पुरुषस्य कृषौ प्रवर्तमानाः—भ६। एतत्सूक्तप्रस्तावनायां सप्तममन्त्रस्य देवताविषये योऽभ्यूहः कृतः स यद्युचितस्तर्ह्ययमप्यभ्यूह आवश्यको भवति। सप्तम्याः कृषिस्तुतित्वं यदा प्रस्ता-वनायां प्रविष्टं तदैव 'पुरुषस्य कृषौ प्रवर्तमानस्य' इत्यपपाठो भाष्ये प्रविष्टः ॥ १६. [ ८ ] आस्फारे—भ१.२.४-*मॅ। आस्थाल्य—ग; अस्फारे—त-भ६-मु। आस्कोरा—भ७ ॥ ३९५. ४. [ १३ ] रतिं—उद्गीथ-मु-आउफ्रेष्ट। मतिं—§-मॅ ॥

[ १०. ३५ ] ३९५. २७. [ १ ] द्यावापृथिवी द्यावापृथिव्यौ—ग-त३-भ१.२.४.५.७। द्यावापृथिव्यौ–त-भ६-मॅ-मु ॥ ३९७. ६. [ ६ ] अश्विनावपि—त-भ-मु। अश्विनौ–मॅ ॥ १४. [ ७ ] स प्रार्थितः—ग-त३-भ१.२.४.७। अप्रार्थितः ( ? )–त-भ६-मॅ। प्रार्थितः–मु ॥ ३९८. २७. [ १२ ] पश्वे पशवे—मु। पश्वे–भ। पश्वे पश्वात्मकाय–त१.२.७-भ६-मॅ; पश्वात्मकाय–त४.५। ऋ. सं. १.४३.२; १.६५.१; ८.५.२०; १०.६१.१२ द्रष्टव्यम् ॥

[ १०. ३६. ] ३९९. २७. [ १ ] सर्वं—ग-त३-भ१.२.४.७-*मॅ। स्वर्ग–त१.२.६.७-मु; सर्व–त४; सर्ग–त५; सर्ग–भ६ ॥ ४००. २८. [ ५ ] पिन्वतां सिञ्चतु—ग-भ५.६। पिन्वतां प्रीणयतु किंतु–त१.२.६.७-मु; पिन्वतां किंतु–त४.५-भ१.४.७-मॅ। पिन्वतां वृष्ट्या सिंचतु–उद्गीथ ॥ ४०१. ८. [ ६ ] अस्माकं—ग-त३-भ। नोऽस्माकं–त-मॅ-मु। प्रथमायां पङ्क्तावपि ‘ नोऽस्माकम् ’ इत्यनावश्यकम्। ‘ अस्माकम् ’ इत्येव प्रतीकम् ॥

[ १०. ३७. ] ४०३. २०. येन सूर्य–भ-मु। येन सूर्यो–त-मॅ॥ ४०४. २. [ १ ] देवेषु जाताय—त१.३.४-भ। देवेषु जाताय देवार्थमुत्पन्नाय–त२.७-मॅ-मु। देवार्थमुत्पन्नाय–त५.६-भ६। देवजाताय देवात् प्रजापतेः सकाशादुत्पन्नाय-उद्गीथ ॥ ४०७. १०. [ १२ ] निधत्त—ग-त३-भ५.६-मु-उद्गीथ। विधत्त–त-भ१.२.४.७–मॅ ॥

[ १०. ३८. ] ४०७. १३. ताण्ड्यशाट्यायनकाः—भ६-मु। तांडकं छाट्यायनकाः–ग; तांडवा शाट्यायनका–त१.२.४.५.६; तांडवा छाट्यायनका–त३-भ१.२.४; तांडवाः शाट्यायनकाः–त७-*मॅ। पञ्चममन्त्रभाष्यं द्रष्टव्यम्। ‘ तांडवशाट्यायनका ’ इति मॅ-संसूचितम् ॥ ४०८. ५. [ ३ ] त्रैवर्णिको वा अदेवः देवादन्यो—भ१.४.६.७। त्रैवर्णिको वादेवः अन्यो–त१.२.६; त्रैवर्णिको वा देवादन्यो–त५। त्रैवर्णिको वादेवश्चान्यो–मु। त्रैवर्णिकोऽदेवः देवादन्यो–भ२-मॅ। यो दासः अकुलीन इत्यर्थः। आर्यो वा कुलीनो वेत्यर्थः। अदेवः देवादन्यो वा पिशाचासुरराक्षसादिकः–उद्गीथ ॥ २७. [ ५ ] कुत्सस्याह्वं। कुत्सस्य ह्वं–शा. ब्रा; जै. ब्रा.। २८. अभ्यवदत्—*मॅ-मु। न्यवदत्–ग-त-भ ॥ ३०. प्रादुद्रवदिति—ग-*मॅ। प्रादुद्रवदिमपि–त; प्रादुवदिति–त३ ॥ ३२. वाभ्रींशतेत—*मॅ। ढ्रिशतेन–ग; वाभ्रियतेन–त; वाभ्रिशतेन–भ-मु। प्रादुद्रवदिति–भ-मु। प्राद्रवत्–शाट्या ब्रा., जै. ब्रा. ॥ ३१. आहूतवन्तौ—भ६-*मॅ-मु। आहूयतांतं–ग; आहूतवतौ–त१.२.६.७; आहूतवंतौ–त४.५; आहूतवंतं–त३-भ। ताण्ड्य ब्रा. ९.२.२२ द्रष्टव्यम् ॥

[ १०. ३९. ] ४१०. [ ३ ] ऋतस्य। ‘ स्तस्य ’ इति संहिता ॥ ४१. २८. [ ६ ] मे मम संबन्धिनमिममाह्वानम् (?) —§-मॅ-मु ॥ ४११. २०. [ ८ ] पुनः पुनरपि—ग-त३-भ२.६। पुनरपि–त४-भ१.४.७-मॅ-मु ॥ ४१३. २१. [ १४ ] वां—त-भ६-मु। ततो वां–त३-भ१.२.४.७-मॅ ॥

[ १०. ४०. ] ४१४. २६. [ ३ ] बन्दिनो वाणी कापा—त३-भ२.६-मु। वंदीनो वरणी कापा–त१.४.६; बंदीनो वरणी कापा–त२.५; बंदिनो वाणी सापा–भ१.४। वंदिनो वाणी कापा–ग-*मॅ ॥ ४१५. ५. [ ४ ] युवां—ग-*मॅ-मु। युवं युवां–त-भ ॥ ४१६. ४. [ ७ ] पराजीयमानं—ग-उद्गीथ। पराजयमानं–त-भ-मॅ-मु ॥

[१०. ४२] ४२०. २२. [५] स्पन्द्रं स्पन्दनशीलं—ग-मु। स्यंद्रं स्यंदनशीलं-त-भ-मॅ। 'स्पन्द्रम्' इत्येव संहितापाठः न 'स्यन्द्रम्'। ऋ. सं. १.१८०.९; ५.५२.३; ८; ८७.३; ६.१२.५ अत्रापि स्पन्द्र इति पकारयुक्त एव पाठः। नागरीलिपिलिखितपुस्तकेषु प्रायेण यकारपकारयोः साम्यं दृश्यते। ऋ. सं. ६.१२.५ टिप्पणी द्रष्टव्या। 'स्पन्द्रम्' इत्येव उद्गीथभाष्ये॥ २५. पूर्वाह्णे–ग-*मॅ। पूर्वाह्णः–त१.२.४.७; पूर्वाह्णः–त३.५-भ-मु॥

[१०. ४३.] ४२२. २७. इति याज्ये—§-मॅ-मु। इति याज्या-आश्व. श्रौ.॥ ४२४. ११. [५] पूर्वोऽपि—ग-*मॅ। पुत्रोपि–त-भ१.२.४.७; प्रत्नोपि–भ६। पुरातनोपि-मु॥ ४२५. ६. [८] पतयति—*मॅ। पतयत् पतति–ग; पतयद्भि–त१.२.४.५.६; पतयत् गच्छति वि–त७; पतति–त३-मु; पति–भ१.२.४; पतयत् अपातयत्–भ६; तपति–भ७॥

[१०. ४४] ४२६. १७. [२] अस्मदभिमुखं—त-भ-मु। अस्मदभिमुखः–मॅ॥ २३. [३] नृणां—ग-त४.५-भ६। नृणां–त७-मु; नेतॄणां–त१.२.३.६-भ१.२.४.७। नरां नेतॄणां–मॅ॥ ४२७. १७. [५] अनाधृष्याणि—ग-भ२.६–*मॅ। अनाधृष्यानि–त-भ१.४.७। अनाधृष्या अनाधृष्याणि–मु॥ ४२८. ८. [७] ये उपरे—*मॅ–उद्गीथ। ये अपरे–§-मु॥ २०. [८] किंचेन्द्रो वृष्णः......मदे सति—*मॅ। लिखितपुस्तकेष्वशुद्धाः पाठाः। किंचेंद्रो वृष्णः स्वोदरस्यासक्तृत् वर्षणशीलान् सोमान् पीत्वा मदे सति–मु। वृष्णः वर्षितॄन् स्वोदकस्य सेक्तॄ सोमान् पीत्वा मदे सति मत्तः सन्नित्यर्थः–उद्गीथ॥

[१०. ४५] ४२९. १४. वत्सप्रिराग्नेयं—§-मॅ-मु। वत्सप्रीराग्नेयं–अनु.॥ ४३०. ४. [२] धामानि—त१.२.६.७-मु-उद्गीथ। सद्मानि–त३.४.५-भ-मॅ॥ १३. [३] त्वा त्वां—§-मु। त्वां-मॅ॥ ४३१. ३. [४] द्यावापृथिव्यौ—त-भ२.६.७-मु-उद्गीथ। द्यावापृथिवी द्यावापृथिव्यौ–भ१.४-मॅ॥ ५. क्षामां वै रेरिह्यमाणो—*मॅ-मु। क्षाम वै रोरिह्यमानणं-ग; क्षामामा वै रेरिह्यमाणं–त१.२.४.५; क्षामा वै रेरिह्यमाणं–त६-भ॥ ४३२. २१. [९] सुम्नं—भ२(प्रान्ते).७-*मॅ-उद्गीथ। द्युम्नं-ग-त-भ१.४.६-मु॥ ४३३. २. [१०] जनिष्यमाणैः—ग-त-भ६-मु-उद्गीथ। जनयिष्यमाणैः-भ१.२.४-मॅ। जैनिष्यमाणैः–भ७॥ १६. [१२] अस्य मन्त्रस्योद्गीथभाष्यमधो दीयते—अस्तावि स्तुतोऽग्निः। नरां मनुष्याणां सुशेवः बहूपकारित्वात् सुसुखः वैश्वानरः विश्वेषां नराणां नेता कर्मसु प्रवर्तयिता विश्वैर्वा नरैर्यागार्थं नीयमानः विश्वानरस्य वा अपत्यभूतः ऋषिभिरस्माभिः सोमगोपाः सोमस्य रक्षिता रक्षआदिभ्यः। इदानीं कृतकृत्याः सन्तो वयं अद्वेषे द्वेषरहिते अस्माकमुपरि परस्परतो वा द्यूते द्यावापृथिवी हुवेम आह्वयाम नश्वरदृष्टादृष्टफलदानायास्मभ्यं यूयमपि हे कर्मागदेवाः अग्निसहिताः धत्त दत्त रयिं धनं दृष्टादृष्टफललक्षणं अस्मे अस्मभ्यं सुवीरं सुपुत्रसहितं॥

## अष्टमोऽष्टकः

अष्टमाष्टकभाष्यसंशोधनार्थमुपयुक्तानि लिखितपुस्तकानि–ग (१,२,४), त (१,२,३,४,५,६; ७,८), भ (१,२,४,५,६,७,८)॥

[१०. ४६] ४३५. ८. अनुवर्तनात्—ग१.२-त१.२.३.७-मु। अनुवर्तमानात्–ग४-भ-मॅ॥ १६. [१] वेत्ता—त१.२.३.४.५.७-*मॅ-मु। ज्ञाता–ग-त६.८-भ१.४.५.६.८;

शानं–भ२ ॥ १८. यद्वा अपां अपसामित्यर्थः—*मॅ। अपसामित्यर्थः–ग१.२-त१.२.३.७.८-भ; यद्वा अप इति ( 'इति' नास्ति–त४ ) कर्मनाम अपसामित्यर्थः–ग४-त४; अपां समीप इत्यर्थः यद्वा ( 'यद्वा' नास्ति–त५ )–त५.६ ॥ ४३६. १. [ २ ] चतति°—ग४-त१.२.३.६.७.८-भ-मु। चरति°–त४; चशति°–त५। चति°–ग१.२-मॅ॥ स्तोत्रैर्वा इच्छन्त आत्मन इच्छन्तः—*मॅ-मु। स्तोत्रैर्वा इच्छंतैः अनमिषंतो–त१; स्तोत्रैर्वा इच्छंतः आत्मानं इच्छंतः–त२.६-भ६; स्तोत्रैर्वा इच्छंतः अंनमिषंतो–त३.७; र्वा इच्छंतः आत्मानं इच्छंतः–त८-भ१.२.४.८; स्तोत्रैर्वा अग्निमिच्छंतः अनिमिषंता–त४; स्तोत्रैर्वा हवंतः अनिमिषंता–त५ ॥ २०. [ ४ ] नेतारं प्रापयितारमरतिं गन्तारं–त४-*मॅ-मु। नेतारमरतिं गंतारं–ग-त८-भ; नेतारं प्रापयितारं–त१.२.३.५.७; नेतारं–त६ ॥ २८. [ ५ ] जेतव्यान् शत्रून जयन्तं–*मॅ। जेतव्यं–ग-त८; जेतव्यान्–त१.२.३.४.५.६.७-भ-मु ॥ २९. [ ५ ] भूर्जयन्तमित्येकपदं मत्वा—ग१.२-*मॅ-मु। भूर्जयंतमित्येकपदमिति मत्वा–ग४-त६.८-भ; भूर्जयंतमित्येकं पदमिति कृत्वा–त१.२.३.४.५; भूर्जयंतमित्येकपदं कत्वा–त७। उद्गीथभाष्यस्य अयमेक एव निर्देशः सायणभाष्ये। 'भूः भूरादीन् लोकानित्यर्थः अत एव च मह्यां महांतं विपोधां...' इत्यादि उपलभ्यमानोद्गीथभाष्यलिखितपुस्तके। 'जयन्तम्' इति पदस्य व्याख्यानाभावात् भाष्यमिदं त्रुटितं दृश्यते। तथापि 'भूः' इति पदस्य व्याख्यानात् सायणोक्तेः सत्यत्वं प्रतीयते ॥ ४३७. १७. [ ६ ] कर्मणा यन्त्रैः—मु। 'अयन्त्रैः' इत्यस्य स्थाने 'यन्त्रैः' इति भाष्यकारैः पठितम्। कर्मणायंत्रैः–मॅ। अयन्त्रैः अयमनैः गमनप्रतिबंधरहितैः स्वर्गमार्गैः–उद्गीथ ॥ २६. [ ७ ] श्वेतिमानमञ्चन्तः—ग४-भ६.८-*मॅ-मु। श्वेतिमानमन्वसंचतः–ग१.२; श्वितिमानमवंत–त१.२.३; श्वितिमाननांचंत–त४; श्वितिमानवसंत–त५; श्वितिमानमर्चतः–त७; श्वेतिमानमंवतः–त८; श्वेतिमानमवंतः–भ१.४.७; श्वेतिमानमंवंतः–भ२। ऋ. सं. २.३३.८ भाष्ये 'श्वितीचे' इति पदस्य व्याकरणप्रक्रिया द्रष्टव्या ॥ श्वेतं–§-मु। श्वेतः–मॅ ॥ ४३८. १५. [ ९ ] किंच ईळेन्यं—§-मु। ईळेन्यं-मॅ ॥ यमग्निं—§-मु। अग्निं-मॅ ॥

[ १०. ४७ ] ४३८. २९. बुद्धयेन्द्र—ग-त६-भ। बुध्यद्र–त८। बुध्द्वेंद्र–त१.२.३.४.५.७-मॅ-मु ॥ ४३९. २६. [ ३ ] धनं च—ग-त-भ१.४-मु। धनं–भ२.६.७.८-मॅ ॥ ४४०. १९. [ ६ ] जिगाति अभिगच्छति—ग-त-भ१.२.४.५.६.८-मु। जिगाति–भ७-मॅ ॥ ४४१. ४. [ ७ ] हृद्द्युभ्यां ङेरुपसंख्यानमिति सप्तम्या अलुक्—त-भ१.२.४.६.८-मु। ङेरुपसंख्यानमिति सप्तम्या अलुक्–ग; हृद्द्युभ्यां ङेरुपसंख्यानमिति–भ५। हृद्द्युभ्यामित्युपसंख्यानात् ङेरलुक्–मॅ। १२. [ ८ ] दद दाने—§-मु। ददातेः–मॅ ॥

[ १०. ४८ ] ४४२. २ [ १ ] हविषो दात्रे—ग-त१.२.३.४.५.६.८-भ२.४.५.६.८-मु। हविर्दात्रे–त७। दात्रे–भ१.७-मॅ ॥ ११ [ २ ] तदत्रोच्यते—ग-मु। तत्रोच्यते–त-भ-मॅ ॥ २४ [ ३ ] सेनासमूहं। समूहशब्दस्य नपुंसकलिंगप्रयोगश्चिन्त्यः ॥ कुर्वन्ति—ग-त१.२.६.८-भ। कुर्वंते–त४-मॅ। मु-पुस्तकेऽस्य मन्त्रस्य भाष्यमेवम्–मह्यं मदर्थं त्वष्टा देवः आयसमयोमयं वज्रं आयुधं अतक्षत् संपादितवान्। अपि च देवाः मयि विषये ऋतुं यज्ञं अवृजन् कुर्वंति मम अनीकं अश्वादि सूर्यस्येव रवेरिव दुस्तरं दुरवगाहं। किंच कृतेन निष्पादितेन कर्त्वेन वृत्रवधादिरूपेण कर्मणा उपलक्षितं मां सर्वे आर्यंति गच्छंति ॥ अर्यमीश्वरं—त-भ। आर्यमीश्वरं–मॅ ॥ ४४३. १५ [ ५ ] सर्वस्य

**धनस्य**—ग-त-भ२.४.५.६.८-मु। धनस्य–भ१.७। धनस्य सर्वस्य–मॅ॥ ४४४. १०[७]**यथा**—ग-*मॅ-मु। त-भ-पुस्तकयोः 'यथा' नास्ति॥ **जीर्णव्रीह्यादिस्तम्बान्**—त३-*मॅ। जीर्णकदयादिस्तंभान्–ग; जीर्णव्रीह्यादिस्तंभान्–त; जीर्णव्रीह्यादिस्तंभनात्–भ। निष्पावजीर्णव्रीह्यादिस्तंवान्–मु॥ २१ [८] **उत वा अपि च**—ग-त-भ१.२.४.५.६.८-मु। उतावपि च–भ७। उतापि च–मॅ॥ २८ [९] **आश्रयणीयः सन्**—त-भ१.२.४.६.८-मु। आश्रयणीयः–ग-भ७-मॅ॥ ४४५. १४ [१०] **अस्था अस्थ्ना**—त८-भ१.२.६। अस्था अस्थ्ना न–त६; अस्था अस्था–भ४.७.८। अस्था–ग-त१.२.३.४.५.७-मॅ-मु॥

[१०. ४९] ४४६. २१ [३] **सुखवासाय**—§-मु। सुखार्थे–मॅ॥ ४४७. १७ [५] 'अकरम्' इति पदपाठः। 'करम्' इति भाष्यकारैः स्वीकृतमिति व्याकरणप्रक्रियया स्पष्टम्। अकरं कृतवानस्मि–उद्गीथ॥ १८ **अरन्धयं वशमनयम्**—त-मु। अरंधयं वशं गमयः–ग१.२; अरंधयं वशमगमयं–ग४। अरंधयं–भ-मॅ॥ २५ [६] **अनुषक्तः**—ग-त६.८-भ६.८-मु। आनुषक्तः–त१.२.३.४.५.७-भ१.२.४.७-मॅ॥ ४४८. ७ [७] **ऋधगित्ययं**—त५.६.८-भ। ऋधगित्यव्ययं–ग-त१.२.३.४.७-मॅ-मु॥ १२ [८] **सप्तहा सप्त°**—ग-त१.२.३.४.५.७-मु। सत°–त६.८-भ-मॅ॥ **शत्रुपुरां**—ग-त२.३.४.५.६.७.८-भ४.५.६.८-मु। शत्रुपुरा–त१-भ२; शत्रूणां पुरां–भ१; शत्रूणां पुरां वा–भ७। पुरां शत्रूणां वा–मॅ॥ १६ **अडभावः**—त-भ-मु। अडभावश्छांदसः–ग। अडभाव आर्षः–मॅ॥ २३ [९] **स्रवतीः**—§। स्रवंतीः (?)–मॅ-मु। स्रवतः नदान् सिंधुलोहितप्रभृतीन्–उद्गीथ॥ २६ **अलम्भयम्**—मु। लेभेयं–ग१.२; लंभयं–त-भ१.२.४.५.६.८; लभेय–ग४; लभयं–त३-भ७। अलभं–मॅ। लिखितपुस्तकपाठसादृश्यात् मु-पाठः स्वीकृतः। 'अलभे' इत्यपि संभवेत्। विदं लब्धवानस्मि–उद्गीथ॥ २७ **पुषादि° इत्यादिना**—भ१.२.४.६.८-मु। पुष्पादीत्यादिना–भ७; पुपादित्यादिना–त। पुषादित्वात्–मॅ। दिवादौ लाभार्थे विद्धातुर्नास्ति॥ ४४९. ६ [१०] **आगामिवर्षासमय°**—ग४-त१.२.३.४.७.८-भ१.२.८-मु। आवर्षसमय°–भ७। आगामिवर्षसमय°–त५-मॅ॥

[१०. ५०] ४४९. १९ **सप्तर्चं**—ग-त-भ२.६-मु-उद्गीथ। अष्टर्चं–भ१.४.७.८-मॅ॥ ३० [१] **सांहितिको दीर्घः**—§-मु। दीर्घः–मॅ॥ ४५१. ५ [४] **विश्वस्मिन् सर्वस्मिन्**—ग-त-भ४.५.६-मु। विश्वस्मिन्–भ१.७-मॅ॥ ६ **भुवः**—§-मु। अभवः–मॅ॥ १६ [५] **अम गत्यादिषु...छान्दस उमादेशः**—*मॅ। लिखितपुस्तकेष्वशुद्धाः पाठाः। अम गत्यादिषु औणादिकः अत्रन्प्रत्ययः छांदस ऊमादेशः–मु॥ १८. **एता एतानि**—ग-त-भ५.६.८-मु। एतानि–भ१.२.४.७-मॅ॥ २४ [६] **सर्वाणि सवना**—त-मु। सवना सर्वाणि–मॅ॥ ४५२. ५ [७] **स्तोत्रकर्तारो**—त-भ-मु। स्तोत्रकृतो–मॅ॥

[१०. ५१] ४५२. २८ [१] **तत् प्रावरणं**—ग१.२-त-भ-मु। तत्र प्रावरणं–ग४। प्रावरणं–मॅ॥ **तत्तत्**—त-भ-मु। तत्–मॅ॥ ४५३. १ **जातप्रज्ञ ते**—ग-त-भ१.२.४.६.८-मु। जातप्रज्ञान–भ७-मॅ। 'ज्ञ ते' इति पृष्ठमात्रालेखनरीत्या 'ज्ञात' इति स्यात् नतयोश्च सादृश्यम्॥ १८ [३] **अप्प्रविष्टं**—त६.८-भ५.६। प्रविष्टं–ग-त१.२.३.४.५.७-भ१.२.४.७.८-मॅ-मु॥ २७ [४] **देवा**—ग-त-भ१.२.४.६.८-मु। देवगणा–भ७-मॅ॥ २९ **हविर्वहने**—ग४-त२.७-

भ१.४.६.७। हविर्वहनप्रयोजने–त४.५-मॅ-मु ॥ नैव योजयन्तु—त६-मु। नैव योजयंत–ग-त२.३.७-भ१.२.४.५.८; नैवायोजयंत–त१; नैव योजयतो–त४; नैष योजयंतो–त५; नैष योजयत–त८-भ६; नैव योजयंत्–भ७। मैव योजयंत (?)–*मॅ ॥ ४५४. ९ [ ५ ] त्वं तु—ग-त१.२.३.४.५.६.७-भ-मु। त्वं–त८-मॅ ॥ १२ संमत्या। समित्य–मु। 'तव संमत्या' इति समीचीनमिति मॅ-मतम् ॥ १३. वह च—ग-त१ २.३.६.७.८-भ१.५.६.८-मु। वह–त४.५-भ२.४.७-मॅ ॥ २१ [ ६ ] वृणोति—§-मु। वृणुते–मॅ ॥ २३ गौरो न गौरमृग—ग-त३.६.८-भ४.५.६-मु। गौपा न गौरमृग–भ८; गोरो न गौरश्रृंग–त१.२; गोरो न गौरमृग–त७; गौरमृग–भ१; गौरो मृग–भ७। गौगे न मृग–मॅ ॥ ३० [ ७ ] युक्तः—§। युंग्मः–मु। तथा–मॅ ॥ संयुक्तः—त१.२.३.६.७.८-भ-मु। युक्तः–ग-त४.५-मॅ ॥ ४५५. ८ [ ८ ] प्रतिजानाति। प्रति + ज्ञा इत्यात्मनेपदी धातुः ॥ १४ तस्मादाहुराग्नेयाः......। 'तस्मादाहुराग्नेयाः प्रयाजानुयाजा आग्नेयमाज्यमिति' इति शाङ्खायनब्राह्मणम् ( १.२ )। 'शरीरदाया ह वा अग्नयो भवन्ति' 'पुरुषाहुतिर्यस्य प्रियतमा' इति वाक्यद्वयं नोपलब्धम्। 'प्रियतमा' अस्य स्थाने 'प्रयतमेति' इति मु-पाठः ॥

[ १०. ५२ ] ४५६. १४ [ २ ] आहुतिर्भवति भवत्वित्यर्थः—त४.५.७-भ४-मु। आहुतिर्भवति भवतुमित्यर्थः–ग। आहुतिर्भवत्वित्यर्थः–त६.८-भ१.२.७.८-मॅ। प्रादुर्भवति भवत्वित्यर्थः–त१.२.३ ॥ १५ तदेवोभयं भवतीति—*मॅ। तदेव भक्षयंतीति–ग; तदेवाभयंतीति–त१.२.३ ८; तदेवाभयं भवतीति–त४.५; ते देवा भयंतीति–त६-भ२.८; तदेवा नयंतीति–त७; तदेवा भवंतीति–भ४। तदेवोभयंतीति–मु। एतच्छन्दोगब्राह्मणवचनमन्वेषणीयम् ॥ २९ [३] स्वात्मानं—ग-त१.२.३.४.६.७.८-भ-मु। आत्मानं–त५-मॅ ॥ ४५७. ७ [ ४ ] कल्पयाति कल्पयति—भ४.६-मु। कल्पयति–ग-त४.५.६.८-भ५.७; कल्पयाति कलायति–त१.२.३.७। कल्पयाति–भ१.२.८-मॅ ॥ २५ [ ६ ] मह्यं—§। मह्यं च–मॅ-मु ॥

[ १०. ५३ ] ४५७. २८ दुवृचस्य—ग-त१.२.३.५.६.७.८-भ१.२.४.५.६.८-मु। तृचस्य–त४-भ७-मॅ ॥ ४५८. ६ [ १ ] जानंस्तथा—त-भ४-मु। जानन्–ग। तथा–भ१.२.६.७.८-मॅ ॥ ८ नि षत्साद्धि—मु। नि षद्धि–त१.२.३.७-भ१.२.६; नि पत्संधि–भ७; नि षद्धि–भ८। नि हि षत्सत्–भ४-मॅ ॥ २१ [ ३ ] जीवति मृतशब्दो जायते तस्य—*मॅ। जीवति सति मृतप्रया जायते तस्य ( तस्याः–त४.५ )–ग-त४.५; जीवति सति प्रया जायत ( जायते–त६-भ६ ) तस्याः–त१.२.३.६.७.८-भ६; जीवति सति प्रजा अजायते तस्याः–भ४; जीवति प्रजाया जायते तस्या–भ१.२.७.८। जीवति सति मृतशब्दो जायते तस्य–मु। ऐ. ब्रा. ७.९; ऋ. सं. ५.१.६ भाष्यं च द्रष्टव्यम् ॥ २९ [ ३ ] गुह्यां—ग-त-भ१.२.४.६.८-मु। जिह्वां गुह्यां–भ७-मॅ ॥ ४५९. २७ [ ६ ] अग्न्यन्तराले श्यातिक्रमणे—*मॅ-मु। अग्नितराले ख्यातिक्रमणे–त१.२.३.७; अस्यंतराले श्यातिक्रमणे--त५; अग्निनराले ख्यातिक्रमेण--त६.८-भ१.६.८; अग्निनरोले ख्याभिक्रमेण--भ२; अग्न्यंतराले ख्यानिःक्रमेण--भ४; अग्निनरोवेद्याभिक्रमेण--भ७ ॥ २८ मध्यं—त१.२.३ ६.८-भ-मु। मध्ये--त४.५.७-मॅ ॥ च पूरयेत्—त१.२.३.६.७.८-भ-मु। वापूरयेत्--त४.५। चापूरयेत्--मॅ ॥ ४६१. १ [ ८ ] सं रभध्वम्—इति न व्याख्यातम् ॥ ४६२. १ [ ११ ] ते मरुतो। 'ते ऋभवो' इति मु-पाठो युक्तः। 'चर्माणि' इत्यस्यानन्तरं 'वा' इति मु-पुस्तकेऽधिकम् ॥

[ १०. ५४ ] ४६३. ९ [ ३ ] केऽपीत्यर्थः—ग-त६-८-भ-मु । कोऽपीत्यर्थः (?)--त१. २.४.५.७-मॅ ॥ १० मातरं च—§-मु । मातरं--मॅ ॥ १८ [ ४ ] उत्तरसूक्त उपान्त्यवर्जिते—*मॅ-मु । उत्तरसूक्ते उपांत्यवर्जितेषु--त४.५; उत्तरसूक्ते उपेत्येवर्जितेषु--त१.२.३.७; उत्तरसूक्तेषु उपांत्यवर्जितेषु--त६.८-भ; उत्तरसूक्ते उपांत्यवर्जितेषु दूरे तन्मामेत्यादिचतसृषु मंतृषु--ग ॥ १९ वेत्सि--ग-त-भ१.२.४.६.८-मु । अदाभ्यान्यहिंस्यानि वेत्सि--भ७-मॅ ॥ ४६४. १० [ ६ ] °मधुरद्रव्याणि—ग-त६.८-भ८-मु । °मधुद्रव्याणि--त३.४.५-भ१.२.४.७-मॅ ॥

[ १०. ५५ ] ४६४. २३ [ १ ] सती—§-मॅ । सत्यौ--मु ॥ अवेत्यब्रूतां—*मॅ । आह्वातवत्यौ--ग; अहेत्यब्रूतां--त-भ । मु-पुस्तक एतन्नास्ति ॥ ४६५. १५ [ ३ ] आपृणात्—त-भ-मु । अपृणात्--ग-मॅ ॥ १६ °रक्षःसंज्ञकान्—ग-त१.२.३.४.५.७-भ१.२.७-मु । रक्षसःसंज्ञकान्--त६-भ४.६.८; रक्षससंज्ञकान्--त८ । राक्षससंज्ञकान्--मॅ ॥ २९ [ ४ ] यच्च—ग-त१.२.३.४.७-भ१.२.४.७.८-मु । या--त५.६.८; यदा--भ६ । यद्वा--मॅ ॥ ४६६. १० [ ५ ] अननमनः प्राणनं—*मॅ-मु । अनतिः प्राणनं--ग१.२; अनने अनः प्राणनं--ग४; अनेनमनः प्राणनं--त१.२. ३.४.५.७-भ२.४.६.८; अमनेन मनः प्राणनं--त६; अननः प्राणनं--त८; अनेनमनः प्रीणनं--भ१. ७ ॥ १३ अद्य—ग-त३.४.५.७-भ-मु । अयं--त१.२.८-मॅ ॥ २३ [ ६ ] सुपर्णरूपकेण—त-भ-मु । सुपर्णरूपेण--ग-मॅ ॥

[ १०. ५६ ] ४६७. १७ वाय्वादि°—त१.२.३.७-भ७-मु । वाय्यादि°--त४.५.६.८-भ१.२.४.६.८-मॅ ॥ ४६८. २ [ १ ] यत्सूर्यः—ग-*मॅ-मु । ये सूर्यं--त-भ१.२.४.६.८; यः सूर्य--भ७ । अस्याः श्रुतेर्मूलमन्वेषणीयम् ॥ ४६९. २४ [ ६ ] संबन्धिनं—§-मॅ-मु । 'संबन्धि' इति भाष्यम् ॥

[ १०. ५७ ] ४७०. १२ एतस्मादनुक्रमणीसूत्रात्पूर्वं विद्यमानः 'पराणि चत्वारि सूक्तान्युक्ता ऋषयो द्वैपदे त्वत्रिमण्डले' इतीयानंशः भाष्यकारैर्नादृत इति दृश्यते ॥ २३ [ १ ] लिखित-पुस्तकेषु वर्तमानाः शाट्यायनकब्राह्मणपाठभेदा मॅक्समुल्लरमहाशयैः सोद्धारं विचारितास्ते तदीयायां टिप्पण्यां द्रष्टव्याः ॥ २३ [ १ ] अभ्यगमंस्ते । अभ्यदासंस्ते--शाट्या ब्रा.; जै. ब्रा. । २४ तं ह स्मानग्नौ निधाय । तौ ह स्मानग्नावधिधाय-शाट्या. ब्रा.; जै. ब्रा. ॥ पचतोऽग्नौ । पचतोऽनग्नौ—शाट्या. ब्रा., जै. ब्रा. । पचतोनग्नौ--ग ॥ २५ असुरान्नं दग्ध्वा । असुराशनं जग्ध्वा--शाट्या. ब्रा.; जै. ब्रा. ॥ २६ आवां । आवं--शाट्या. ब्रा.; जै. ब्रा. ॥ २७ [ ६ ] 'अयं ह्याततन्तुर्यत्प्रजाः' इति ब्राह्मणवाक्यस्य मूलं नोपलब्धम् ॥ २७ न्वेता नाभितपन्तीति । त्वैता नाभितप्स्यन्तीति--शाट्या. ब्रा.; जै. ब्रा. ॥ २८ आहुत्य । आहृत्य--शाट्या. ब्रा.; जै. ब्रा. । समाहृत्य--ग । २९ मा प्र गाम—§ । प्र गाम--मॅ-मु ॥ ४७१. २ [२] साधयिता देवेष्वाततः—ग-त-मु । साधयिता--भ-मॅ ॥ ३ प्राप्नुयाम—*मॅ । प्राप्नोमि--ग-त१.२.३.७; प्राप्नुमः--त५; प्राप्नोति–त६.८-भ । व्याप्नुयाम–मु ॥ ५ [ ३ ] च तिसृभिः--मु-आश्व. श्रौ । चतसृभिः--§-मॅ ॥ ८. आ हुवामहे आह्वयामहे—ग४-त१.२.३.४.५.७-मु । आ हुवामहे–ग१.२-त६.८-भ-मॅ ॥ ११. मन्मभिश्च—§-मु । मन्मभिः–मॅ ॥ १५. [ ४ ] क्रत्वेऽपानाय दक्षाय प्राणाय—*मॅ । क्रत्वे प्राणनाय दक्षाय अपानाय ( अपानताय-ग४ ) च–ग-भ८; क्रत्वे प्राणनाय दक्षाय अपाननाय–त४.५-भ४; क्रत्वे प्राणनाय अपाननाय–त१.२.३.७-मु; क्रत्वे प्राणनाय दक्षाय अपानाय–त६-भ६; क्रत्वे–त८;

क्रत्वे प्राणाय अपाननाय-भ१; क्रत्वे प्राणानाय दक्षाय अपाननाय-भ२; क्रत्वे प्राणाय अपानाय-भ७ ॥ १६. ज्योक् चिरकालं सूर्यं च दृशे सूर्यं द्रष्टुं—ग-त-भ-मु। ज्योक्च चिरकालं सूर्यं दृशे सूर्यं द्रष्टुं-मॅ ॥ २०. [ ५ ] 'पितरः' इति पदं भाष्यकारैः संबोधनान्तस्य स्थाने प्रथमान्तं गृहीतं दृश्यते। तथा च 'मनः' इत्यस्य स्थाने 'जनः' इत्यपि स्वीकृतम् ॥ २७. [ ६ ] युक्ताः सन्तः—ग-त-भ५.८-मु। युक्ताः-भ१.२. ४.७-मॅ ॥

[ १०. ५८ ] ४७२. ७. [ १ ] °जीवनाय—§-मु। °जीवनायेत्यर्थः-मॅ ॥ ४७३.१. [ ५ ] तदिति गतम्—त-भ-मु। तदावर्तयामः-मॅ ॥

[ १०. ५९ ]. ४७५.६. [ २ ] अत्रापि न्विति—मु। अत्रान्विति-§। अत्र न्विति-मॅ ॥ जीर्णा स्तुता वा—ग-त३-भ२.८-*मॅ। जीर्णा स्तुति- त१.२.७; जीर्णा स्तुतिर्वा-त३.६.८-भ; जीर्णा स्तोता वा-त४.५। जीर्णा स्तुता-मु ॥ ९. गच्छतु—ग-त३.४.५-मु। गच्छतां-त१.२. ६.७.८-भ-मॅ ॥०२३. [ ४ ] मा कार्षीः—त१.२. ३.भ-मु। नोऽस्मान् मा कार्षीः-ग-त७-मॅ ॥ २४. सूर्यदर्शनासंभवात्—ग-त१.२.३.६.७.८-भ१.२.४.६.८-मु। सूर्यसंदर्शनासंभवात्-त४.५; सूर्यदर्शनात्-भ७। सूर्यादर्शनात्-मॅ ॥ ४७६. ३. [ ५ ] चिरसंदर्शने—त१.२.३.७-*मॅ-मु। चिरसंदर्शन-ग-त४.५.६-भ ॥ वर्धयस्व वर्धय—ग-त४.५.७-भ१.२.७-मु। वर्धयस्व वर्धयस्व-त१.२.३; वर्धय वर्धय-त६-भ४.८। वर्धय वर्धयस्व-मॅ ॥ ९. [ ६ ] प्राणं पुनः—त-भ-मु। पुनः प्राणं-मॅ ॥ ४७७. ५. [ ८ ] रपः—त१.२.३.७-भ६.८-मु। परः-भ१.२.४; परं-भ७। परं रपः-मॅ ॥ ६. ह्विनस्तु—त१.२.३.७-भ४.६-८-*मॅ-मु। ह्विनस्ति-ग-त४.५; ह्विनस्तु-त६.८; मा आगच्छतु-भ१.७ ॥ १५. [ ९ ] परिरक्षन्तु—§-मु। रक्षंतु-मॅ ॥ २१. [१०] समीरय संप्रेरय—भ६-मु। संप्रेरय समीरय-त-भ१.२.४.७.८। समीरय प्रेरय-ग-मॅ ॥

[ १०. ६० ] ४७७. २८. स्पर्शनहेतुभूतो देवता। °भूतो हस्तो देवता इति पाठं मॅक्स-मुल्लरमहाशया अभ्यूहन्ति ॥ २९. पञ्चाद्या—मु-अनु। पञ्चम्याद्या-त-मॅ ॥ ४७८. २८. [ ५ ] अनयेन्द्रमाह्वयतेऽसमात्यर्थं—*मॅ। अनयेंद्रमाशते समत्यर्थं-ग; अनयेंद्रमासते असमात्यर्थं-त१.२. ३.६.८-भ६; अनया इंद्रस्य समासतेत्यसमात्यर्थे-त४.५; अनया इमासते असमात्यर्थं-भ१.२.४; अनया समातिषु असमात्यर्थं-भ७; अनया इंमासते-भ८। अनयेंद्रमाशासते असमात्यर्थं-मु ॥ ३०. दर्शनाय—ग-त-भ१.२.४.५.६.८-मु। संदर्शनाय-भ७-मॅ ॥ ४७९. १३. [ ७ ] एषान्तः°। एषोऽतः°-शाट्या. ब्रा., जै. ब्रा. ॥ सुप्रीतस्तस्थौ—§-मॅ-मु। सव्रीळस्तस्थौ-बृहद्दे ॥ १४. गौपायनानभि—त६.८-*मॅ-बृहद्दे। गोपायनाविभि-ग; गोपायनानिति-त१.२.३. ७; गोपायननभि-त४.५; गोपायनानभि-भ२.४.६.७.८। गौपायनानिति-मु ॥ १५. सूक्तेन ते—§-मॅ-मु। सूक्तेनाप्य-बृहद्दे ॥ १५. द्वैपदेन यथात्रिषु—*मॅ-मु-बृहद्दे। द्वैपदसूक्तेन स्तुवन् येद्रदचिषु-ग; द्वैपदं यद्वदत्रिषु-त१.२.३.६.७.८-भ; द्वैपदं यद्वमत्रिषु-त४.५ ॥ अथाग्निरब्रवी°-§-मॅ-मु। अग्निरप्यब्रवी°-बृहद्दे ॥ १६. चेक्ष्वाको°-§-मॅ-मु। चैक्ष्वाको°-बृहद्दे ॥

[ १०. ६१ ] ४८१. ६. सूक्ते शंसय ते—ग२-त६-भ६-*मॅ। सूक्ते संयते-ग१-त१. २.३.७; सूक्तं संयते-त४.५; सूक्ते संस्तूयते-भ१.२.७; सूक्ते संयंते-भ८। सूक्ते संयच्छते-मु ॥

८. यज्ञं पारं प्रापय्य–*मॅ। यज्ञपरं पारं प्रापय्य–ग-त-भ८; यज्ञपारं प्राप्य–भ१.२.७; यज्ञपारं प्रापय्य–भ४; यज्ञस्य परं पारं प्रापय्य–भ५.६; यज्ञं परं पारं प्रापय्य–मु ॥ ९. तं च–भ६-*मॅ-मु। ते च–ग-त-भ२.८ ॥ २२. [ १ ] तेन नाभानेदिष्ठः—*मॅ-मु। तेनायं नाभानेदिष्ठः–ग; तेन यन्नाभानेदिष्ठः–त-भ ॥ २५. यज्ञं पारं । यज्ञपारं–§-मॅ-मु। सूक्तप्रस्तावना द्रष्टव्या ॥ ४८२. ३. [ २ ] यथा घनः--*मॅ-मु। यथा घनं–§ ॥ १६. [ ३ ] आदिशम् आदिश्य–ग-त४.५-भ६-मु। आदिशे आदिश्य–त१.२.३.७; आदिश्य–भ। आदिशं–त६.८-मॅ ॥ ४८३. ९ [ ५ ] अस्तेः सिपि – – – –मॅ। अस्तेः तिपि लोपः–ग; अस्तेः सिपि रूपं–त४-मु। अत्र भाष्यांशो लुप्त इति विस्पष्टम्। ऋ. सं. १०. १२९. ३ भाष्ये 'आः' इत्यस्य व्याकरणप्रक्रिया द्रष्टव्या ॥ २५. [ ७ ] रोहितं भूतामृश्यो भूत्वा—मु। रोहिता भूतां म्रश्यो भुवा–ग; रोहिता भूतामृश्यो भूता–त१.२.७; रोहिता भूतां मृश्यो भूता–त३.४.५; रोहिता भूतां–त६.८; रोहिता भूत्वा–भ१; रोहिता–भ४; रोहिता भूता–भ६.८। रोहितो भूत्वा–भ२-मॅ ॥ ४८४. ५. [ ८ ] गोनिरोधायागच्छन्तं—मु। गोनिकरायागच्छतं–ग; गोनिरोपागच्छंतं–त१.२.३.७; गोभिरोच्चागच्छंतं–त४.५; गोनिरोपगच्छंतं–त६.८; गोनिरोयछतं–भ१.४; गोनिरोधायागच्छतं–भ२। गा निरोधयंतं–मॅ॥ ८. यः कश्चित्–ग१.२-*मॅ; किंच–ग४-त४.५; यं किंचि–त१.२.३.७.८–भ८; यं किंचित्–भ१.४.६; यं कंचि–भ२; यं किंच -त६। मु-पुस्तके 'यः कश्चित्' इति नास्त्येव ॥ २९. [ १० ] ऋतयुक्ति–ग४-त-भ१.२.४.६.८-मु। ऋतयुक्तिमग्मन्–ग१.२-भ७-मॅ ॥ ४८५. २. 'अदक्षिणानि सत्राणीत्याहुः' 'ये यजमानास्त ऋत्विजः' इति वाक्यद्वयं कुत उद्धृतम्? ॥ १०. [ ११ ] हे इन्द्र—§-मॅ-मु। 'हे रुद्र' इति भाव्यमिति–मॅ-मतम् ॥ २०. [ १२ ] स्तोता इति—त४। स्तोत्रकर्ता–ग१.२; तेतेति–त१.२.३.६.७.८-भ२.८; तेते–त७; ते इति–भ१; तेति–भ६; ति–भ४; इति–ग४-भ७-मॅ-मु ॥ ४८७. १. [ १६ ] रेजयत् अकम्पयत्—त१.२.३.७-भ६-मु। रेजयत् कंपयत्–त४.५। रेजयत्–ग४-त६-भ१.२.४.७.८-मॅ ॥ स एवाग्निं—*मॅ-मु। स एवाग्निः–त१.२.३.६.८-भ; सोम एवाग्निः–त४.५.७ ॥ अशक्तं सन्तं—*मॅ-मु। अशक्तः सन्--§ ॥ २. रेजयत्—त१.२.३.७–भ४.६.८-मु। रेजयत् अकंपयत्–ग४-भ१.२.७-मॅ ॥ २०. [ १८ ] सूर्यापत्यत्वेऽपि पर्यवस्यति—मु। सूर्यापत्यमपि मित्येवं पर्यवसाम्यति–त१.२.३.७-भ१.२.८; सूर्यापत्यमित्येवं पर्यवस्यति–भ४; सूर्यापत्यमपीत्येवं पर्यवसाम्यति–भ६। सूर्यापत्यत्वं पर्यवस्यति–भ७-मॅ ॥ ४८८. ५. [ १९ ] द्विजा......प्रथमजाः—*मॅ। द्विजाः ऋतस्य प्रथमजाः–ग; द्विजा ऋतस्य--त१.३.७; द्विजाः प्रथमजाः ऋतस्य–त२; द्विजा – – ऋतस्य प्रथमजाः–त४.५; द्विजा ऋतस्य प्रथमजाः सत्यप्रथमजाः–त६; द्विजा--ऋतस्य प्रथमजाः सत्यप्रथमजाः–त८; द्विजाः ऋतस्य प्रथमजाः सत्यस्य प्रथमजाः–भ१.४.७; द्विजा – – ऋतस्य तस्य प्रथमजाः सत्यप्रथमजाः–भ६; द्विजाः ऋतस्य तस्य – – सत्यप्रथमजाः--भ८। द्विजा ब्रह्मांडजा ऋतस्य–मु ॥ १४. [२०] शिशुः शंसनीयः सेनेव--*मॅ। शिशुः सेनेव--ग; शिशुर्न सेनेन–त-भ४.८; शिशुर्न सोनेन–भ१.२.७। श्रेणिर्न पिपीलिका पंक्तिरिवाहिं शिशुः शंसनीयः–मु ॥ ४९०. १०. [ २६ ] अद्भिर्देवताभिर्देववान्—ग१.२-मु। देवताभिर्देववान्–त१; देवतातिर्देववान्–त७; देवताभिर्देवचने–त४.५; देवताभिर्देवान्–भ७। देवताभिर्देववान्–त२.

३.६.८-भ१.२.४.८-मॅ । 'अद्भिरब्देवताभिर्देववान्' इति स्यादिति मॅक्समुल्लरमहाशयैः संसूचितम् ॥ २०. [ २७ ] प्रापयथ—त१.२.३.६.७.८-भ-मु । प्रापय-त४; प्रापय ये च-ग४ । प्रापयत-मॅ ॥ २१. अमूरा अमूढाः—ग-त१.२.३.४.५.७-मु । अमूढाः-त६.८-भ । अमूराः-मॅ ॥

[ १०. ६२ ] ४९३. २० [ ७ ] तत्पुण्याय च कर्माणि—त१.२.३.७.८-भ१.२.४.८-मु । तत्पुण्यानि च कर्माणि-ग१.२ । तत्पुण्याय च कर्मणि-ग४-त४.५.६-भ७-मॅ । अयं श्लोको बृहद्देवतायां नोपलभ्यते । एवमेवाष्टममन्त्रप्रस्तावनायामागतः 'सावर्णिना' इत्यादिरपि ॥ ४९४. १३ [ १० ] गोपरिणसौ—*मॅ । 'गोपरीणसौ' इति मुद्रणदोषः । परिणद्धपशू-§ । गोपरीणसौ परिणद्धपशू-मु ॥

[ १०. ६३ ] ४९४. २९ चोत्तरया—ग४-भ८-*मॅ-मु । चरया-ग१.२; सोत्तरया-त१.२.३.४.५-भ२.४; वात्तरया-त६; उत्तरया-त७; बोत्तरया-त८; तोत्तरया-भ१; वा सा सहोत्तरया-भ६ ॥ पृष्ठ्याभिप्लवषडहयोरतृतीयेऽहनि वैश्वदेवशस्त्र एतत्सूक्तं वैश्वदेवनिविद्धानम्—त१.२.३.४.५.७-मु । पृष्ठ्याभिप्लवषडहयोः तृतीयेहनि वैश्वदेवनिविद्धानं-ग१.२; पृष्ठ्याभिप्लवयोस्तृतीयेहनि वैश्वदेवनिविद्धानं-त६-भ४; पृष्ठ्याभिप्लवयोस्तृतीयेहनि वैश्वदेवे एतत्सूक्तं वैश्वदेवं निविद्धानं ( वैश्वदेवनिविद्धानं-त८-भ६.८ )-ग४-त८-भ१.२.६.७.८-मॅ । ऋ. सं. १०.६६ सूक्तप्रस्तावना द्रष्टव्या ॥ ४९५. २० [ २ ] उत अपि च......भवन्ति—ग-त२.३.४.६.७.८-भ१.२.४.५.८-मु । इदं नास्ति भ७-मॅ-पुस्तकयोः ॥ ४९६. २ [ ३ ] स्तुतिबलान्—§ । अतिबलान् (?) -मॅ-मु ॥ ४९७. ४ [ ६ ] कः वा यजमानः । 'वः' इत्युत्तरार्धे पदम् । भाष्यकारैः 'वा' इति पठितम् ॥ ४९८. ८ [ १० ] उदयनीयायां—ग१.२-त१.४.५-भ१.२.७-मु । उदनीयायां-ग४-त२.३; उदयनीया-त६.८-भ४.६; उदनीयां-त७; उदयनी-भ८ । उदयनीयाया-मॅ ॥ ४९९. ८ [ १२ ] दुर्ज्ञानं-§ । दुर्विज्ञानं-मॅ-मु ॥ १५ [१३] हे देवाः—ग-त-मु । हे श्व देवाः-भ१.७ । हे विश्वे देवाः-भ२.८-मॅ ॥ १९ सन्मार्गे नयथ—त१.२.३.६.७-भ१.२.४.८-मु । सन्मार्गेण प्रापयथ-ग; सन्मार्गेण नयथ-त४ । सन्मार्गं नयथ-त८-भ७-मॅ ॥ २५ [ १४ ] विनाश्यन्ते-ग-त१.२.३.६.७.८-भ६.८-मु । विनश्यंते-त४-भ१.२.४.७-मॅ ॥

[ १०. ६४ ] ५०२. ३ [३] गन्तुमशक्यं—§-मॅ-मु । 'गूहितुमशक्यम्' इति स्यादिति मॅक्समुल्लरमहाशयानामभिप्रायः । अगोह्यमगूहनीयं सर्वजनप्रकाशमित्यर्थः-उद्गीथ ॥ ५०३. ३० [८] सोमाभिषेकार्थे—ग-त६.८-भ । सोमाभिषानार्थे-त२.३; सोमाभिषानार्थे-त७ । सोमाभिषवार्थे-त१.४.५-मॅ-मु ॥ ५०४. ३ [ ८ ] यज्ञपरिशिष्टस्वामिनं—ग-त४.५-भ२.८-मु । यज्ञपरिशिष्टे स्वामिनं-त१.२.३.७ । परिशिष्टस्वामिनं-त६.८-भ६-मॅ ॥ १४ [ ९ ] प्रयच्छन्तु—ग-त१.२.३.४.६.८-भ । प्रयच्छतु-त५.७-भ७ । प्रयच्छत-मॅ-मु । हे देवीः देव्यः आप......दत्तेत्यर्थः-उद्गीथ ॥ २२ [ १० ] सौधन्वनः—ग-*मॅ-मु । सौधन्वः-त१.२.३.७; सोधन्वः-त४.५; सौधन्व-त६.८-भ ॥ २३ शंसमानस्य स्तोतुः—ग । शंसमानं स्तोतुं-त१.२.३.६.७.८-भ-मु; तत्समानं स्तोतुं-त४.५ । शंसमानं स्तोतॄन्-*मॅ । 'शंसमानान् स्तोतॄन्' अथवा 'शंसमानस्य स्तोतुः' इति स्यादिति मॅक्समुल्लरमहाशयाः । अपरः पाठो लिखितपुस्तक उपलब्ध इति स्वीकृतः ॥ ५०५. ८ [ १२ ] हे मरुतः......दत्तवन्तः स्थ—मॅ-मु । हे इंद्रादयो देवाः यां धियं यत्कर्म मे मह्यं

दातुमिच्छथ हे मरुतः हे इंद्र ( इंद्रादयो–त४.५ ) देवा ( हे देवा–ग-भ५ ) हे वरुण हे मित्र यूयमददात दत्तवंतः स्थ–§। पूर्वं भाष्यांशो लुप्तः स्यात्, अनन्तरं केनापि प्रान्ते पूरितः पुस्तकेष्वस्थाने प्रविष्टः स्यादिति मॅक्समुल्लरमहाशयानामभिप्रायः ॥ १२ प्राप्ताः स्थ—मॅ-मु। 'प्राप्नुथ' इति भाष्यमिति प्रतिभाति। 'वहाथ लोडर्थे लङ् वहथ प्रापयथ यूयं'–उद्गीथ ॥ ५०६. १ [ १४ ] लटि—ग-त४.५। लिटि–त२.३.६.७.८-भ२.८-मॅ-मु। भूते लट्–उद्गीथ ॥

[ १०. ६५ ] ५०७. ५ [ १ ] **सजोषसः संगताः सन्तः अन्तरिक्षं स्वमहिम्ना आपूरयन्तीत्युत्तरेण संबन्धः**—त१.२.७-मु। सजोषसः संहत्या--ग-त३.४.५-भ१.२.४.६; सजोषसः--भ७। सजोषसः संहत्य--*मॅ। अस्य मन्त्रस्योद्गीथभाष्यमेवं वर्तते—ऋज्वर्थे यादृग्देवतानामानिर्देशार्थत्वात्। सजोषसः समानप्रीतयः समानसेवाः स्वर्बृहत्। द्यौर्महतीत्यर्थः। सोमोऽत्र चंद्रमाः ॥ ११ [ २ ] **वृत्रहत्येषु वृत्रहननेषु युद्धेषु। यद्वा कर्मणि छान्दसः क्यप्। वृत्राणि शत्रवो हन्यन्तेऽत्रेति वृत्रहत्या युद्धानि**—त१.२.७-मु। युद्धानि--ग-त३.४.५.६.८-भ। वृत्रहत्या युद्धानि--मॅ। एतौ प्रथमद्वितीयमन्त्रभाष्यभागौ सायणाचार्याणामेव कृतिरिति विश्वसितुं प्रमाणं नास्ति। परं केषुचित्पुस्तकेषूपलब्धत्वात् सम्यगर्थकरत्वाच्च स्वीकृतौ। द्वितीयमन्त्रस्योद्गीथभाष्यं–इन्द्राग्नी सत्पती सतां पातारौ वृत्रहत्येषु वृत्रहनने शत्रुवधेषु निमित्तभूतेषु मिथः परस्परेण सहितौ हिन्वाना शत्रुवधाय गच्छन्तौ तन्वा शरीरेण। स्वयमेवेत्यर्थः। समोकसा संगतनिवासौ अनन्तरितपृथिव्यन्तरिक्षस्थानौ सोमश्च घृतश्रीः उदकलक्ष्मीरुदकन्नेव नोपा उदकाश्रया वा। महिमानं महत्त्वमात्मानमीरयन् सर्वत्र सदा गमयन् वर्तेथे। एते यथोक्ता देवा अन्तरिक्षमाकाशं महि महत् आपप्रुः आपूरयन्ति स ओजसा स्वेन बलेन महत्त्वलक्षणेन ॥ ५०९. ५ [ ७ ] **वा देवाः**। वा--ग-त१.२.३.६.७.८-भ; देवा वा--त४.५-मॅ। देवा--मु। ऋतावृधः ऋतस्य सत्यस्य यज्ञस्योदकस्य वा वर्धयितारः--उद्गीथ ॥ ५१०. १९ [ ११ ] **आकारलोपः**—ग-त१.२.३.४.५.७-भ६-मु। अकारलोपः--त६.८-भ१.२.४.७.८-मॅ ॥ २० **व्रता व्रतानि**—ग-त१.२.३.७-उद्गीथ। व्रतानि--त४.५.६.८-भ-मॅ-मु ॥ ५११. ११ [ १३ ] **भवार्थे**—ग। भावार्थे--त४.५। भावार्थे--त१.२.३.६.७.८-भ-मॅ। भावर्थे (?)-मु ॥

[ १०. ६६ ] ५१२. १९ [ २ ] **तत्तत्कार्येषु**—ग-त-भ२.८-मु। नतत्कार्येषु--भ१.४। तत्कार्येषु--भ७-मॅ ॥ ३० [ ३ ] **गयं गृहं**—ग-त१.२.३.४.५.७। गृहं गयं--त६.८-भ-मॅ-मु ॥ ५१३. २ **लेट्याडागमः**—ग-त१.२.३.६.७.८-भ१.२.५.७.८-मु। लेटयडागमः--त४.५-भ४-मॅ ॥ ५१४. ७ [७] **अग्नीषोमा अग्नीषोमौ**—ग-त१.२.३.४.५.७-मु। अग्नीषोमौ--त६.८-भ-मॅ॥

[ १०. ६७ ] ५१७.२३ [२] **प्रज्ञावतः**—ग१.२-त-भ-मु। प्रज्ञानवतः--ग४-मॅ। प्राणवतः प्रज्ञावतो वा--उद्गीथ ॥ ५१८. २० [ ४ ] **आडागमः**—ग-त१.२.३.६.७-भ१.२.४.५.८। अडागमः--त४.५-भ७-मॅ-मु ॥ २७ [ ५ ] **उषःकालं ततः**—§-मु। उषःकालतः (?)-मॅ ॥ २८ **मन्त्रं सूर्यं**—§-मॅ-मु। 'मन्त्रम्' इति मास्तु अथवा 'मन्त्रं सूर्यं वा' इति भवत्विति मॅक्समुल्लरमहोदयाः ॥ ५१९. ७ [६] **सः पर्णि**—ग१.४-त-भ-मु। पर्णि--त२-मॅ ॥ २५ [८] **कप्रत्ययः**—ग१.२-त१.२.७-मु। प्रत्ययः--ग४-त३.४.५.६.८-भ-मॅ ॥ ५२०. २१ [ ११ ] **निधानाय**—ग१.२। धानाय--ग४-मु। ध्यानाय--त-भ-मॅ। ऋ. सं. १०.५५.१ द्रष्टव्यम् ॥ ५२१. ३ [१२]

ततः—ग४ । अतः--त-भ-मॅ-मु ॥ ४ प्रत्यगमयत् अस्रावयत् वा । प्रत्यगमयत् अस्रावत् ( अस्रवयत्--ग१; असावत्--ग४; अस्रवत्--भ२; अस्रावयत्--भ४ ) यद्वा--ग१.४-त-भ२.४.५.६.८; प्रत्यगमयत् यद्वा--ग२ । प्रत्यगमयत् अस्रावयत्- मु । प्रत्यगमयत्--भ७-मॅ ॥

[ १०. ६८ ] ५२१. १५ [ १ ] यथा—*मॅ । न-ग२; मु-इतरेषु च ' यथा ' नास्ति ॥ २३ [ २ ] संनयति—ग-त-भ-मु । नयति--मॅ ॥ २५ स्वसामर्थ्येन—ग१.२ । स्वसामर्थ्य -मॅ-मु इतरेषु च ॥ ५२२. २३ [ ५ ] समन्तात्—ग-त१.२.३.६.७.८-भ । आ समंतात्--त४.५-मॅ-मु ॥ ५२३. २३ [ ८ ] निर्जभार पर्वतान्निर्जहार—ग-त१.२.३.७-मु । निर्जभार--त४.५.६.८-भ-मॅ ॥ ५२४. ३ [ ९ ] °वलस्य पर्वणः......निर्जहार—*मॅ-मु । लिखितपुस्तकेष्वशुद्धाः पाठाः ॥ १४ [ १० ] सूर्याचन्द्रमसौ—§-मु । सूर्यचंद्रमसौ--मॅ ॥

[ १०. ६९ ] ५२६. १२ [ ४ ] त्वा त्वां—ग-त१.२.३.४.५.७-भ२-मु । त्वां--त६.८-भ१.४.६.७.८-मॅ ॥ ५२८. ९ [ १० ] प्रत्नान्—ग-*मॅ-मु । सत्वान्--त५.६.८-भ; सश्वान्--त४; इतरेषु नास्ति ॥ १८ [ ११ ] °दीप्तिमन् वा—ग-त१.२.७-मु । °दीप्तिमन्--त३.४.५.६.८-भ-मॅ । विकल्पार्थत्वात् ' वा ' आवश्यकः ॥

[ १०. ७० ] ५३०. ६ [ ४ ] °शब्दस्येमनिचि—ग१.२-त२.३.६.७.८-भ२.८-*मॅ-मु । °शब्दस्यमनिचि--ग४-भ६; °शब्दस्येमनिनि--त४.५; °शब्दस्येमनिवि–भ१.४; °शब्दान्मनिनि---भ७ ॥ ७ अकारस्येकारो वर्णव्यापत्त्या—ग४-त१.२.३.६.७.८-भ१.२.४.६.७-*मॅ-मु । इकारस्य अकारो वर्णव्याप्त्या--ग१.२; अकारस्येकारो वर्णव्यापत्त्या--त४.५; आकारस्येकारो वर्णव्यापत्त्या--भ८ ॥ १७ [ ५ ] 'पृथिव्या' इति पदम् । ' पृथिव्याः ' इति भाष्यकाराः । पृथिव्या वा मात्रया वा इत्थंभूतेलक्षणे तृतीयैषा पृथिव्या परिमाणभूतया--उद्गीथ ॥ ५३१. २४ [ ९ ] प्राप्तवानसि—§-मु–उद्गीथ । प्राप्तवान्--मॅ ॥ २५ तप्रत्ययस्य—ग-त१.२.३.६.७.८ । वप्रत्ययस्य--भ१.२.७.८; तुप्रत्ययस्य--भ४ । प्रत्ययस्य--त४. ५-मॅ-मु । ऋ. सं. १०.१०४.६ द्रष्टव्यम् ॥ सहायः—ग२ । सखायो--ग४-त१.२.६.७.८-भ; रुखायो--त३; स्तदायो--त४; स्तदाया--त५ । सखा--मॅ-मु ॥

[ १०. ७१ ] ५३२. १९ सुज्योतिः परमं ब्रह्म—§-मॅ । यज्ज्योतिः परमं ब्रह्म--मु । यज्ज्योतिरमृतं ब्रह्म--बृहद्दे ॥ ५३४. २६ [ ५ ] शुश्रुवान् —ग-त-भ४.६-मु । शुश्रुवान् श्रुतवान्--भ१.७-मॅ ॥ ५३५. ५ [ ६ ] तित्याज तत्याज—ग-त१.३.४.५.७-मु । तित्याज--त२.६.८-भ-मॅ ॥ १८ [ ७ ] तस्मादेते व्यक्ततरे इव । अस्याः श्रुतेर्मूलमन्वेषणीयम् ॥ २१ ऋच्छन्ती इव खे उद्गन्ताम् । अस्या अपि मूलमन्वेषणीयम् ॥ ५३६. २६ [ १० ] सखिभूतेन—ग४ । प्रतिभूतेन–त-भ-मॅ-मु । 'प्रतिभूभूतेन' अथवा ' सखिभूतेन ' इति भाष्यकारैः लिखितं स्यादिति मॅक्समुल्लरमहाशयाः । विद्वत्सखिभूतेन–उद्गीथ ॥ २९ एषां—ग-त-भ१.२.४.६.८-मु । येषां–भ७-मॅ ॥ जायते—§-मु । संजायते–मॅ ॥ ५३७. १० [ ११ ] प्रयोगं—*मॅ-मु । प्रयोगे–त१.२.३.७.८-भ१.२.४.७.८; प्रयोगेषु–त४.५.६; प्रयोगः–भ६ ॥ १३ [ ११ ] न निघातः—ग४-त६-*मॅ-मु । निघातः–त१.२.३.७.८-भ२.४.७; प्रतिघातः–त४.५; अनिघातः–भ८ ॥

[ १०. ७२ ] ५३८. २०. [ २ ] अधिष्ठानस°—ग-त४.५-*मॅ-मु । अधिष्ठानाः स°–त१.३.७-भ२; अधिष्ठानात्स°–त२; अष्टानाः स°–त६.८-भ८; आदितेः स्थानाः स°–भ६; अष्टानां

तत्स°–भ८ ॥ ५४०. १० [ ८ ] **विवस्वानादित्यश्च** । इन्द्रश्च विवस्वांश्च–तै. आ. ॥ २१ [ ९ ] **मृताद्व्यृद्धाद्दण्डात्**—ग२.४-त१.२.३-भ२.४.८-*मॅ-मु ॥

[ १०. ७३ ] ५४०. २८ **महाव्रतेऽपि निष्केवल्ये**—§-मॅ-मु । 'महाव्रतेऽपि मरुत्वतीये' इति भाष्यम् । ऋ. सं. १.१६५;६.१७;१०.२७ प्रस्तावनासु द्रष्टव्यम् । **निविद्धानम्**—§-मॅ-मु । मरुत्वतीयम्–ऐ. आ. ॥ ५४१. १५ **तमिन्द्रं निषण्णेति**—ग-त-भ२.८-*मॅ-मु । सहितं च निषणेति–भ१.४; सहितमिंद्रं निषणेति–भ६; सहितं च निषणोति–भ७ ॥ १६ [ २ ] **अवर्धयन्**—ग१.२-त४ । अवर्धत–ग४-त१.२.३.५.६.७.८-भ-मॅ-मु ॥ २३ [ ३ ] **पादा पादौ**—ग१.२-भ२ । पादादौ–त१.३.७; पदो पदौ–त४.५; पादौ दौ–त२; पादौ–ग४-त६.८-भ१.४.७.८-मॅ-मु ॥ ५४२. १५ [ ५ ] **तमांसि......**मॅ । तमांसि च ता माया व्यनाशयत्–ग१.२; इतरेषु भाष्यं लुप्तम् । वृष्टीः प्रावपत् तमांसि च प्रावपत् व्यनाशयदित्यर्थः–मु ॥ २१ [ ६ ] **अथेन्द्रस्त्वं**—ग-*मॅ । अथेंद्रस्त्वं–त१.२.३.४.५.७-मु; अथेंद्रः त्वं–त६.८-भ८; अथेंद्र त्वं–भ१.४.७; अथेंद्रः–भ६ ॥ ५४३. १ [ ७ ] **किंच त्वं**—ग-त३.४.५.७-भ२-मु । किंच–त६.८-भ८-मॅ ॥ ५ **सुघ्नं** । सुघ्न-ग१.२; सुघं–ग४-त४.५.६.८; सुघ्न–त१.२.७; सुघ्न–त३; सुघ्नं–भ१.२; सुग्नं–भ४; सृघ्नं–भ६; सघ्नं–भ८ । शीघ्रं–भ७-मॅ-मु । 'स्त्रुघ्नं' इति ग्वाल्हेरलिखितपुस्तके । 'सुघ्न' इति पाटलिपुत्रसमीपं वर्तमानस्य कस्यचन देशस्य नगरस्य च नाम । अद्यतने यमुनायास्तीरे 'सुग' इति ग्रामः वर्तते । स एवायम् ॥ **काञ्चीं**—ग४ । कांशींति–ग१.२; कांती–त-भ१.२.४.८; कांति–भ६ । कांत्या–मॅ । 'काञ्चीं गतो मार्गे' इति मु-पुस्तके नास्ति ॥ १७ [ ९ ] **नवममन्त्रस्योद्गीथभाष्यम्**—अस्य तवेन्द्रस्य यच्चक्रं । चक्रायुधमित्यर्थः। अप्सु लब्धव्यत्वेन निमित्तभूतासु आ निषत्तमुतो मर्यादया मेघैर्निषण्णमपि अनुप्रविष्टं चेत्यर्थः । तच्चक्राद्यायुधमस्मै तुभ्यमिन्द्राय मधु उदकं मेघोदरगतमित् चच्छद्यात् । इदित्येवार्थे । चच्छद्यादिति कान्तिकर्मा । कामयत एव दातुमिति शेषः। तवायुधचेष्टितं निष्फलं न भवति । तदन्तर्गतमुदकमपश्यन् तुभ्यं ददाति तवायुधमित्यर्थः । दत्तं च सत्तदुदकं त्वं पृथिव्यामदधाः दधासि पर्यायेण ओषधीषु औषध्यादिस्थावरेषु च दधासि । यच्च अतिसितं अतिशुद्धं पयः पयोरूपमुदकं ऊधः प्रतीति शेषः । ऊधःप्रदेश इत्यर्थः । गोषु धारयसि त्वं ॥

[ १०. ७४ ] ५४६. ५ [ ५ ] **इन्द्रं देवं**—§-मु । इंद्रं–मॅ ॥

[ १०. ७५ ] ५४७. ३ [ १ ] **त्रिप्रकारं**—मु । त्रिःप्रकारं–§-मॅ ॥ ५४७. २० [ ३ ] **व्याप्नोति**—ग-त१.२.६.८-भ१.२.४.६-मु-उद्गीथ । प्राप्नोति–त३.४.५.७-भ७.८-मॅ ॥ ५४८. १ [ ४ ] **मातरः पुत्रमिव**—ग-त१.२.३-मु । पुत्रमिव–त४.५.६.७.८-भ-मॅ ॥ ३ **तरौ**—*मॅ । भरौ–ग-त-भ१.२.६.८-मु; भाये–भ४; भये–भ७; तदौ–ग्वाल्हेरपुस्तके ॥ १२ [ ५ ] **शृणुत च**—§-मु । शृणुत–मॅ ॥ १४ त७-पुस्तके पञ्चमषष्ठमन्त्रयोर्मध्ये 'सितासिते सरिते यत्र संगते' इत्यादिर्मन्त्रस्तस्य विस्तृतं भाष्यं च लिखितमस्ति । खिलेष्वयं मन्त्रो द्रष्टव्यः । स्पष्टार्थकत्वादस्य भाष्यस्योद्धरणमनावश्यकम् । भाष्यकारस्य नामादिसूचकं वाक्यं भाष्यान्त उपलभ्यते तद्यथा–' इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरकुलावतंसगोविंदसूरिसूनोर्नीलकंठस्य कृतिः स्वोद्धृतमंत्रकाशीखंडमंत्ररहस्यप्रकाशिका समाप्तिमगमत् ॥ ५४९. ५ [ ८ ] **शोभनवसना**—त१.२.३.६.७.८-भ१.२.४.६-मु । शोभनसाना–भ८ । शोभनवस्त्रोपेता–त४.५-मॅ ॥

[ १०. ७६ ] ५४९. २९. [ १ ] 'यथा' इति पदं भाष्यकारैः न व्याख्यातम् ॥ ५५०. ६. [ २ ] धृतोऽश्व—*मॅ-मु । धूर्त अश्व–ग-त१.२.३.६.७.८-भ; धृताश्व-त४.५ ॥ ७. दृढं गृहीतो —ग४-त१.२.३.७-भ२-मु । दृढगृहीतो–त४.५-मॅ । गृहीतो-त६.८-भ ॥ वल्गति—ग४ । चलति–ग१.२; वलानि–त१.२.३.७-भ६; वलाति–त४.५-भ२.८; वलाति–त६.८-भ१.४.७ । बलवान्--*मॅ-मु । वल्ग इति गत्यर्थो धातुः । वल इत्यश्वगतिवाचको धातुः स्यात् अतः 'वलते' इति भाष्यकारैः लिखितं स्यादिति मॅक्सम्युलरमहोदयैः स्वकीयटिप्पण्यां लिखितम् ॥ ९. 'महो' इति संहिता । 'महे' इति भाष्यकाराः ॥ ५५१. २८. [ ७ ] हव्या न—त३.७-भ२.४.६.८ । हव्या न्–ग४-त१.२; ह न--भ१ । हव्या मॅ-मु ॥

[ १०. ७७ ] ५५२. १८. [ १ ] शोभनानां—ग-त-भ२.६.८-मु । शोभमानां–भ१.४; शोभमाना–भ७। शोभमानानां–मॅ ॥ १९. स्तुतवानस्मि–*मॅ-मु। स्तुतोस्मि–ग-त-भ ॥ ५५३. ६. [ ३ ] रिरिच्रे रिरिचिरे—ग४-त२.३.७-मु । रिरिचिरे–त१ । रिरिच्रे--भ-मॅ ॥ १६. [ ४ ] परिष्कर्तारः—*मॅ-मु । परिवेष्टारः-ग; परिष्टारः–त१.२.३.६.७.८-भ; परिष्टा–त४.५ ॥ २४. [ ५ ] तेजस्वन्तः—त४.५-मु । तेजोवंतः–त१.२.३.६.७.८-भ-मॅ । 'तसौ मत्वर्थे' इति सूत्रेण भसंज्ञा भवति, न पदसंज्ञा ॥ ५५४. ५. [ ६ ] द्वेष्टॄन् । कीदृशान्—ग-त-भ१.२.४.६.८-मु । द्वेष्टॄन्–भ७-मॅ ॥ १२. [ ७ ] अध्वर्युभ्य ऋत्विगादिभ्यः । अयुक्तमिदम् । 'ऋत्विग्भ्योऽध्वर्य्वादिभ्यः' अथवा 'अध्वर्युप्रभृतिभ्य ऋत्विभ्यः' इति भाव्यम् ॥ २४. [ ८ ] यामन् यागगमने—ग-त३.६-भ२.६-*मॅ । यामन् यागगमन–त१.२.३.७; यागे यागगमने-त४.५; यामन् यागमने–भ१.४; यामन् यामनि गमने–भ७-मु ॥

[ १०. ७८. ] ५५५. ६. [ १ ] यजमाना—ग-त१.२.३.७-भ६-मु । ये यजमाना–त४.५.६.८-भ८-मॅ ॥ ७. व्यापृता इत्यर्थः—ग-त१.२.३.४.५.७-मु । व्यापृता भवंति–त६.८-भ२.४.६.८-मॅ ॥ ५५६. १५. [ ५ ] ज्येष्ठासः ज्येष्ठाः—त१.२.३.७-मु । ज्येष्ठाः–ग-त६.८-भ-मॅ ॥ ५५७. ४. [ ७ ] दूराध्वनीना—*मॅ-मु । दूराध्वनिनो–ग-त७-भ१.२.७; दूराध्वानिनो–त१.२.३.६.८-भ४.६.८; अदूराध्वानिनो–त४.५ ॥

[ १०. ७९. ] ५५८. ३. [ २ ] गुहा गुहायां—ग-त१.२.४.५.७-मु-उद्गीथ । गुहायां–त३.६.८-भ-मॅ ॥ २६. [ ४ ] प्रभवामीत्यर्थः—ग-त१.२.३.७-*मॅ-मु । भवामीत्यर्थः–त४.५.६.८-भ ॥ ५५९. १६. [ ६ ] चकर्थ—§-मॅ-मु । 'चकर्त' इति संहिता । वि चकर्त विकृतवानहं--उद्गीथ ॥

[ १०. ८०. ] ५६१. ६. [ ४ ] विभृतानि संभृतानि—ग-त१.२.४.५.६.७.८-भ । विभृतानि–त३-मॅ-मु ॥ १६. [ ५ ] गोनां गवां—§-मु-उद्गीथ । गोना–मॅ ॥

[ १०. ८१. ] ५६२. ७. ब्रह्म वै स्वयंभु—श. ब्रा । ब्रह्म नै स्वयंभूः–त-मॅ-मु । ब्रह्म वै स्वयंभु–भ१; ब्रह्म वै स्वयंभू–भ४ ॥ ३०. [ १ ] बहुः—*मॅ-मु । बहु–§ ॥ ५६३. ५. [ २ ] अत्र तस्य—त१.२.३.६.७.८-भ२.६-मु । अत्रैतस्य–त४.५; तत्रास्या–भ१.४.७ । तत्र तस्य–मॅ ॥ ५६४. १७. [ ५ ] मध्यमा मध्यमानि—ग४-त१.२.४.५.६.७-भ२.४.६ । मध्यमो मध्यमानि–त३ । मध्यमानि–त८-भ८-मॅ-मु ॥ शरीराणि—त१.२.३.७-भ२.४.६.८ । धामानि

शरीराणि-*मॅ-मु ॥ ५६५. ११. [ ७ ] °गमनं देवं—ग-त१.२.३.४.५.६.७-भ२.६-मु। °गमनं-त८-भ४.७.८-मॅ ॥

[ १०. ८२. ] ५६६. ४. [ २ ] बहुविधप्रकाश°—ग-त-भ१.२.४.६.८-मु। बहुविध-प्रकार°—भ७-मॅ ॥ २५. [ ३ ] तत्तत्पदेषु—ग१.२-भ२.४.७.८। तत्पदेषु—ग४-त१.२.३.६.७. ८-भ६ मु। तत्रत्यदेवेषु—त४.५-मॅ। स्वीकृतपाठो मॅक्समुल्लरमहोदयैरुपलब्धोऽपि न स्वीकृतः। मॅ-पाठादयमेव साधीयान्। तत्रत्य इति पदं साकाङ्क्षम्। ५६७. २६. [ ६ ] 'अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इति मनुस्मृतिपाठः। वाजसनेयिसंहिता-यामपि ( १७. ३० ) 'तमिद्गर्भम्' इति मन्त्र आगतः। तस्य व्याख्याने 'बीजमवासृजत्' 'सूर्यकोटि°' इति स्मृतिपाठः ॥ ५६८. ४. [ ७ ] सर्ववेदान्तवेद्यं—§-मॅ-मु। तै. सं. ४.६.२.२ सायणभाष्येऽप्येवमेव। वा. सं. १७.३१ महीधरभाष्ये सर्वावदानं वेद्यं इति पाठोऽस्ति सोऽशुद्धः। पृष्ठमात्रालेखनरीत्या 'सर्ववे' इति 'सर्वाव' इति लिख्यते ॥ ६. असन्—ग१.२। असत्—ग४-त-भ-मॅ-मु। नीहारशब्दस्य पुंलिंगत्वात् स्वीकृतपाठ एव युक्तः। वा. सं. १७.३१ महीधरभाष्ये तै. सं. ४.६.२.२ सायणभाष्ये च 'असन्' इत्येव पाठः ॥ नाप्यत्यन्तं सन् काष्ठपाषाणादि-रूपान्तरेण संबन्द्धुमयोग्यत्वात्। काष्ठपाषाणादिचांतरेण संबद्धुमयोग्यत्वात्—ग; काष्ठपाषाणादि-चांतरेण ( वंतरेण-त२; व्यंतरेण—भ१.४ ) संबुद्धमयोग्यत्वात्—त१.२.३.७-भ१.२.४.६.८; काष्ठ-पाषाणादितरेण संबंधुमयोग्यत्वात्—त४.५; एतन्नास्ति भ७-पुस्तके। नात्यन्तं सत् काष्ठपाषाणादि-वत्संबोद्धुमयोग्यत्वात्—*मॅ-मु। अस्मिन् विषये मॅक्समुल्लरमहोदयानां टिप्पणी द्रष्टव्या। अयं मन्त्रः तै. सं. ४.६.२.२; वा. सं. १७. ३१ अत्रागतः भाष्यकारैश्च व्याख्यातः। काठकमैत्रायणीसंहित-योरप्ययमागतः। तै. सं. पाठे 'बभूव' इत्यस्य स्थाने 'भवाति' इति वर्तते। तैत्तिरीयसंहितायाः सायणभाष्यस्य वाजसनेयिसंहिताया महीधरभाष्यस्य च ऋग्वेदसायणभाष्येणातीव साम्यमस्ति। उभय-भाष्यभागस्तुलनार्थमत्रोद्ध्रियते—

वा. सं. महीधरभाष्यं—नीहारेण प्रावृताः नीहारसदृशेनाज्ञानेनावृतत्वान्न जानीथ यथा नीहारो नात्यन्तमसत् दृष्टेरावरकत्वात्, नाप्यत्यन्तं सत् काष्ठाश्मादिवद्रोधयितुमयोग्यत्वात् एवमज्ञानमपि नात्यन्तमसत् ईश्वरतत्त्वावरकत्वात् नापि सत् बोधमात्रनिवर्त्यत्वात् ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। न केवलं नीहारेण जल्प्या च प्रावृताः ॥

तै. सं. सायणभाष्यं—नीहारेण प्रावृता भवन्तो नीहारसदृशेनाज्ञानेनावृतत्वान्न जानन्ति। यथा नीहारो नात्यन्तमसत् दृष्टेरावरकत्वात्, नाप्यत्यन्तं सत् काष्ठपाणादिरूपान्तरेण संबद्धुमयोग्य-त्वात्, एवमज्ञानमपि नात्यन्तमसदीश्वरतत्त्वावरकत्वात्, नापि सद्बाध( ? द्बोध )मात्रनिवर्त्यत्वात्। ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। न केवलं तत्त्वं [ न जानन्तः ] किंतु जल्प्या च ॥

महीधराचार्याः सायणाचार्येभ्यः पूर्वकालीना इति स्पष्टमेव। सायणाचार्यैश्च पूर्वं यजुर्वेदो व्याख्यातः अनन्तरमृग्वेदः। 'आध्वर्यवस्य यज्ञेषु प्राधान्याद्व्याकृतः पुरा। यजुर्वेदोऽथ हौत्रार्थमृग्वेदो व्याकरिष्यते ॥' इति स्वयं तैरेव स्वकीयऋग्वेदभाष्योपोद्घातप्रारम्भे लिखितम्। अत एतन्मन्त्रस्य महीधरभाष्यं दृष्ट्वा सायणाचार्यैः यजुर्वेद एतन्मन्त्रस्य व्याख्यानमारचितं, यजुर्वेदमन्त्रभाष्यानुसारेण

च ऋग्वेदेऽयं मन्त्रो व्याख्यात इति मन्तुमुचितम्। एतदनुसृत्यैवास्माभिरत्र भाष्यपाठोऽभ्यूहितः। 'नात्यत्यन्तं सन्' इति पाठो लिखितपुस्तकेष्वविद्यमानोऽपि महीधरसायणभाष्ययोर्विद्यमानत्वादभ्यूहितः। 'नात्यन्तं सत्' इति मॅक्समुल्लरमहोदयानामभ्यूहः। तथा च तै सं. सायणभाष्ये 'काष्ठपाषाणादिरूपान्तरेण' इति पाठोऽस्ति। लिखितपुस्तकेष्वपि तत्सदृश एव पाठ उपलभ्यते। अतः तै. सं. भाष्यपाठ एवास्माभिः स्वीकृतः। मॅ-पुस्तके तु 'काष्ठपाषाणादिवत्' इति पाठः महीधरभाष्यानुसारेणाभ्यूहितः। किंतु अंतरेण इति सर्वेषु लिखितपुस्तकेषु वर्तते इति मॅक्समुल्लरमहोदयैर्निर्दिष्टमेव। तै. सं. सायणभाष्यपाठः साधीयानित्यपि तैर्लिखितम्। 'संबद्धुमयोग्यत्वात्' इति तै. सं. सायणभाष्यपाठः। लिखितपुस्तकेष्वपि तदनुकूला एव पाठाः। संबन्द्धुमयोग्यत्वात्' इति व्याकरणशुद्धः पाठः त४.५-पुस्तकानुसारेणास्माभिः स्वीकृतः। 'संबोध्दु°' इति मॅ-पाठो लिखितपुस्तकपाठैर्न समन्वैति। 'रोषयितुम्' इति महीधरपाठेन 'संबन्द्धुम्' (अथवा संबद्धुं) इति सायणपाठस्य समानार्थकत्वं न 'संबोद्धुं' इति मॅ-पाठस्य॥ ८. भवन्तः सर्वे जीवाः—§-मु। सर्वे जीवाः–मॅ। वा. सं. महीधरभाष्ये तै. सं. सायणभाष्येऽपि 'भवन्तः सर्वे जीवा' इत्येव पाठः। अतोऽत्रापि तथैव लिखितमिति व्यक्तम्। मॅक्समुल्लरमहाशयानां लिखितपुस्तकेष्वपि 'भवन्तः' इति पदेन भाव्यमेव। वा. सं. तै. सं. भाष्ययोः युष्मच्छब्दसमानार्थकभवच्छब्दस्य 'भवन्तः' इति प्रयोगः पूर्वमागतः सन् पुनरुपयुक्तः ऋग्वेदभाष्ये तु 'यूयम्' इति युष्मच्छब्दप्रयोग एव पूर्वमागतः॥ न केवलं प्रावृतत्वं किंतु जल्प्या च। न केवलं नीहारेणैव प्रावृताः किंतु जल्प्या अपि इति विवक्षा। उपर्युद्धृतं महीधरभाष्यमवलोकनीयम्॥ ९. उदरंभरा। व्याकरणदुष्टः प्रयोगः॥

[१०. ८३] ५६८. १४. [१] मन्युदेवत्यं—ग-त१.२.३.७-भ२.६। मन्युदेवतं–त८-भ१.४.७.८। मन्युदैवत्यं–मु। मन्युदैवतं–मॅ॥ ५६९. १०. [३] उपक्षपणकारी—ग२-भ१.२.४.७। उपलक्षण°–ग४-भ६; उपक्षण°-त१.२.३.६.७.८; उपक्षणंपण°-भ८। उपक्षय°-त-४.५-मॅ-मु॥

[१०. ८४] २५. [१] अयं मन्त्रः तै. ब्रा. २.४.१.१० अत्र पाठभेदेनागतः। तत्रस्थं भाष्यं समीचीनतरमिति मॅक्समुल्लरमहाशयानामभिप्रायः॥ ५७२. २१. [७] हृदयेषु—ग-त१.२.३.६.७.८-भ-मु। हृदये–त४.५-मॅ॥

[१०. ८५] ५७२. २५ पृच्छमानावित्येका—ग-त-भ२.४.८-मु। °वित्येषा–भ१.६.७-मॅ॥ ५७३. १२ [१] यज्ञे—§। यज्ञेन (?)-मॅ-मु॥ २० [२] सोमो नक्षत्राणामेषाम्। न क्षं त्रायन्त इति नक्षत्रा ग्रहचमसादयः—त४.५.६-*मॅ-मु। सोमो नक्षत्राणामेषां न क्षं त्रायंत इति नक्षत्रा ग्रहचमासादयः–भ१.२; सोमो नो नक्षत्राणामेषां न क्ष त्रायंत इति नक्षत्रग्रहचयसादयः–ग४-त१.२.३; सोमो नक्षत्राणामेषां न क्ष त्रायंत इति नक्षत्रग्रहचमसादयः–त७; सोमो नो नक्षत्राणामेषां न क्ष त्रायांत इति नक्षत्रा ग्रहचमसादयः–भ१.४.८; सोमो नक्षत्राणामेषां न क्ष त्रायंत इति नक्षत्रा ग्रहचमसादयः–भ२; सोमेन नक्षत्राणामेषां न क्ष त्रायंत इति नक्षत्रा ग्रहचमसादयः–भ६। मॅक्समुल्लरटिप्पणी द्रष्टव्या॥ २१ प्रसिद्धानां—ग-त-भ२.४.५.६.८-मु। सिद्धानां–भ१.७-मॅ॥ २४ [२] प्रथमां पिब्रते......। कस्याः स्मृतेर्वचनमिदम्?॥ ५७४. १ [३] तं सोमं—ग-त-भ१.२.४.५.७.८-मु। सोमं–भ६-मॅ॥ वर्धनकामार्थं। नवैधनकामार्थं–ग१.

२-भ२; न वैधेनकामार्थ-ग४-त३.६.८; वैधेनुंकामार्थ-त१.२.७; नद्योधनकामार्थ-त४.५; नवैधेनंकामार्थ-भ१.४.६.८। वैधेनकामार्थ-मु। मैथुनकामार्थ-*मॅ॥ ३ [ ३ ] **यद्ब्रह्मशब्दो**—§-मॅ-मु। 'यत्' इत्यनावश्यकम्॥ ११ **अपशवो वा**—ग। अपशवो वो-त१.२.३.६.७। अपशवो-त४.५.८-भ-मॅ-मु॥ २१ [ ४ ] **पौर्णमास्याम्**—मु। पौर्णमास्याममावास्यायां-त४; पौर्णमास्यायां-त१.२-भ-मॅ॥ °**रूपः सोमोऽत्रत्यैः**—मु। °रूपः सोमोन्यैः-ग१.२; °रूपात्सोमात्-ग४; °रूपासोमासत्रैः-त१.२.३; °रूपसोमासुत्रैः-त४.५; °रूपास्त्रत्रैः-त६-भ१.४.६.८; °रूपाः सोमा अस्वम्रैः-त७; °रूपास्वम्रैः-त८; °रूपासोमास्त्रत्रैः-भ२; °रूपैस्तस्तैः-भ७। °रूपोऽत्रत्यैः-मॅ॥ ५७५. १ [ ५ ] **मसी परिमाणे मस्यते परिमीयते**। मसी परिमाणे रमस्यते परिमीयते--ग१.२; मास परिमाण मस्यते परिमीयते--ग४; मांस परिमाणे मस्यते परिमीयते--त१.२.३; मास परिमाणे मस्यते परिमीयते--त४.५.७-भ२; मासः परिमीयते--त६-भ१.४.६.७.८; मस्यंत परिसाय्यत--त८। मस्यते परिमीयते--मु। परिमीयते--मॅ॥ ३ [ ५ ] 'वसन्ते वसन्ते ज्योतिषा यजेत' 'वायुगोपा वनस्पतयः' इति श्रुतिद्वयस्य मूलं नोपलब्धम्॥ ८ **चासि एकैककलाह्रासवृद्धिभ्यां**—ग-त३.४.५-भ२-मु। चास्यै केवलाह्रासवृद्धिभ्यां--त१.२.६; चास्यै केवला ह्रासवृद्धिभ्यां हि--त७; वास्यै कैकला – सवृद्धिभ्यां--भ१.६; त्वास्यै केवलसवृद्धिभ्यां--भ७। चासि एकैककलाक्षयसंवृद्धिभ्यां--मॅ॥ २६ [ ७ ] **त्रिककुन्नामपर्वते......आञ्जते**—*मॅ। त्रिककुन्नाम पर्वतः तेन त्रैककुदेनांजनेन ( त्रैककुदेवानांजननेन--त६ ) सजातीयेन चक्षुष्यांजते ( चक्षुवांजते--ग१.२; चक्षुष्यंते--ग४; चक्षुष्यांजने--भ )--ग-त४.५.६.८-भ; त्रिककुन्नाम पर्वतः तेनात्रैककुदेनांजनेन सजातीयेन चक्षुष्यांजात--त१.२.३.७। त्रिककुन्नाम पर्वतः तेन त्रैककुदेनाञ्जनेन सजातीयेन चक्षुषी अञ्जेत--मु। तै. सं. ६.१.१.५; श. ब्रा. ३.१.३.१२ द्रष्टव्यम्॥ ५७६. ४. [ ८ ] **येनोपशेरते**—*मॅ-मु। येनोक्तनुभवंति-ग१.२; येनोत्तभवंति-ग४; येनानोवति-त१.२; येनोवंति-त३-भ८; योनेः तुवंति-त४.५; येनोक्तभवंति-त६; येनावति-त७; येवानोवति-त८; येनोभय्वंति-भ१; येनोभवंति-भ२.४; येनो-वंति-भ६। ऋ. सं. ६.५३.९; ८.१४.५; ९.७२.१; १.१७३.६ द्रष्टव्यम्॥ ५७८. १८. [ १६ ] **विनिर्दिष्टे**—*मॅ-मु। निविष्टे-ग-त६; निविचष्टे-त१.२.३.४.५.७.८-भ१.२.४.६.८; विनचष्टे-भ७॥ ५७९. ४. [ १८ ] **भुवना भुवनानि**—त१.२.३.७-भ२-मु। भुवनानि-ग-भ१.४.६.७.८-मॅ॥ ५. **यद्यपि**—ग-त-भ१.२.४.५.६.७-मु। यग्वपि-भ८। यदि-मॅ॥ **पुनर्जनिरस्ति**—§-मु। पुनर्जातिरस्ति-मॅ॥ ५८०. ३. [ २१ ] **यतः एषा**—त४। त एषा-ग४। त१.२.३.५.७-भ१.२.६-पुस्तकेषु 'एषा' इत्यस्मात्पूर्वं कियांश्चिदवकाशोऽस्ति। एषा-त६.८-भ४.७-मॅ-मु॥ १४. [ २२ ] **लभामि तेन**—त-भ१.२.४.६.८-*मॅ-मु। लाभामि तेन-ग; लभामि ते-भ७। अयं मन्त्रः कत्यः?॥ १५. **तादृश देव**—त-भ२.६.८-मु। तादृशं देवं-ग। स तादृश देव-भ७-मॅ॥ २७. [ २४ ] **अथास्या योक्त्रं विचृतेत्**—ग४-भ२-*मॅ-मु। अथास्यो योक्त्रं विवृतेत्-ग१.२; अथास्या योक्त्रं विवृते-त१.२.३.७-भ८; अथ योक्त्रं विवृते-त६; अथास्या योक्त्रं विसृजेत्-त४.५; अथा योक्त्रं विवृते-भ६॥ ५८१. ४. **येन पाशेन**—ग-त१.२.३.४.५.७-भ२-मु। येन-त६.८-भ१.४.६.७.८-मॅ॥ **सुसुखो**—ग-त१.३.४.५.६.७-भ। सुखा-त८। सुखो-त२-मॅ॥ ५. **यज्ञविनियोगपक्षे**—ग।

यज्ञयोगपक्षे–त१.२.३; यज्ञवियोगपक्षे–त४.५-भ२; यज्ञविगपक्षे–त६.८-भ१.४; यज्ञयागपक्षे–त७; यज्ञाविगपक्षे–भ८। यज्ञांगपक्षे–मॅ-मु॥ २६. [ २७ ] गृहप्रवेशनी—ग-त१.२.३.७-मु-*मॅ। °प्रवेशनं–त४.५; °प्रवेशिनी–त६.८-भ॥ ५८२. १३. [ २८ ] पतिश्च—ग-त४.५.६-भ। पतिः–त१.२.३.७.८-मॅ-मु॥ ५८३. २. [ ३० ] पापया पापरूपया—ग-त१.२.३.४.५.७.८-भ६.७-मु। पापया रूपया–त६; पापया–भ४। पापरूपया–मॅ॥ २. स्याच्चेदिति—मु। चदिति–ग४; स्योच्चेदिति–त१.२-भ२.८; स्याच्चेति–त३; स्यच्चेदिति–त७; कथं स्मच्चेदिति–भ१; कथं स्माच्चेदिति–भ४; कथं स्माद्येदिति–भ६; कस्माच्चेदिति–भ७। स्यादिति–मॅ॥ १२. [ ३२ ] जप्या—§-मु। याज्या (?)–मॅ॥ ५८४. १४. [ ३५ ] अधिविकर्तनं—*मॅ-मु। विकर्तनं–§॥ यत्त्रिधा वासो त्रिकृन्तन्ति—*मॅ-मु। यत्रिधा वासो विकृंतंति–ग४; यत्त्रिधात्रिधायसो विकृंतंति–ग१.२; यत्रिधा वास्ये विकृंतंति–त४.६; यच्चिधा वास्ये विकृंतंति–त८; यन्विधा वास्ये विकृंतंति (विकृंतनि–भ१.२; विकृंततति–भ८)-त१.२.३.७-भ१.२.४.८; यद्विधा वास्ये विकृंतति–भ६; यन्विधा वसे विकृतंभि–भ७। एतद्दुर्बोधमिति मॅक्सम्युल्लरमतम्॥ ५८५. ५. [ ३७ ] यस्यामूरौ। एतत्पदद्वयं द्विवारमागतं न सम्यगर्थमावहति। यस्याम् इत्यलम्। मॅक्सम्युल्लरटिप्पणी द्रष्टव्या॥ ५८६. १०. [ ४२ ] पौत्रैः—*मॅ-मु। प्रपौत्रैः–§॥

[ १०. ८६ ] ५८८. २५ [ १ ] माधवभट्टास्तु......। ऋग्वेदव्याख्याकर्ता माधवभट्टो वेंकटार्यसुतोऽत्राभिप्रेतः इति तत्पुस्तकसंपादकैः सी. कुन्नन् राजा--महोदयैः दर्शितम्। ऋ. सं. ९.३५.५ भाष्यं टिप्पणी च द्रष्टव्या॥ २९. [१] जनपदे—त५.८-भ१.२.४.६.८। जन--त१.२.३.६.७; जनपदेषु--ग-त४-भ५.७। देशे--मॅ-मु॥ ५९०. १७ [ ७ ] यथेत्र इति संहिता। 'यथैव' इति भाष्यकाराः॥ २८ [ ८ ] किं किमर्थं—त१.२.३.६.७-मु। किमर्थं--ग४-त४.५.८-भ-मॅ॥ एकः किंशब्दः पूरणः—ग१.२। एकः किंशब्दः--ग४-त-भ-मॅ-मु॥ ५९१. १४ [ १० ] संग्रामं वा। समितिः समनमिति संग्रामनामसु। संग्रामं वा समिति समनमिति संग्रामनामसु--ग४-त७-मु; संग्रामं वा समिति संग्रामसु--त१; संग्रामं वा समिति समनमिति संग्रामसु--त२.३; संग्रामं वा समितिः संग्रामसु--भ१.२.४.६.८; संग्रामं समितिः संग्रामनामसु--भ७। संग्रामं समनमिति संग्रामनामसु--मॅ। ५९२ [ १२ ] संस्कृतं—ग१.२-त-भ-मु। संस्तुतं--त४। सुसंस्कृतं-मॅ॥ ५९३. १८ [ १७ ] ईशे ईष्टे—त-भ-मु। ईशे--ग४-मॅ॥ २७ [ १८ ] सूनामुद्धानं—*मॅ-मु। सूनामुद्धनं--ग१.२-त८; सूनामन्नं--ग४; सूनामुद्दहनं--त१.२.३.४.५.६.७; सूनामुद्धनं--भ॥ ५९४. १५ [ २० ] मृगोद्वास°--*मॅ-मु। मृगावास°--ग१; मृगोवास°--ग४-त१.२.३.४.५.६.७-भ१.२.४.६.८; मृगोवाः स--त८; मृगोवामरणं--भ७॥ ५९५. १५ [ २३ ] इन्द्रविसृज्यमानमनेन मन्त्रेण—मॅ-मु। इन्द्रेण विसृज्यमानं शरमुद्दिश्यानेन मन्त्रेण इत्यपेक्षितम्॥

[ १०. ८७ ] २२ अङ्गाराभिविहरणे—*मॅ-मु। अंगाराभिहरणे--ग; आहाराभिहारणे--त१.६; आहाराभिहरणे--त२.७; आहाराभिहारण--त३; अहाराभिहरेण--त४.५; संहाराभिहरणे--त८-भ॥ ५९६. १० [ २ ] मारकव्यापारान्—*मॅ-मु। मारकव्यवहारान्--ग-त४; मारकाद्यावाहन--त१.२.७; मारकावाहन्--त३; मारकयवाहन्--त८-भ६; मारकाद्यवाहन्--भ२.८। 'मारव्यवहारान्' इति स्यादिति मॅक्समुल्लरमहाशयाः। १४, १९ मन्त्रौ द्रष्टव्यौ॥ ५९७. ५ [ ५ ]

शरीरसंधिषु—ग-त१.२.३.६.७.८-भ१.२.४.५.६.८-मु। शरीरसंत्रंधिषु--त४.५-भ७-मॅ॥ ५९८ २७ [ ११ ] यो यातुधानः—*मॅ। यं यातु°--ग; यातु°--त१.२.३.६.७.८-भ-मु; त्वं यो यातु° --त४; त्वं यातु°--त५॥ ५९९. २३ [ १४ ] मारकव्यापारान्—ग२। मारयितव्यान्--त-मु। मारव्यापारान्--भ-मॅ। २, १९ मन्त्रौ द्रष्टव्यौ॥ ६००. २० [१७] अस्मदीयाया गोः—ग-त१. २.३.४.५.७-मु। गोः--त६.८-भ-मॅ॥ २९ [ १८ ] हिंस्रेभ्यः—ग-त१.२.३.६.७-मु। किम्यः –त४; हिंसेभ्यः–त५.८-भ२.४.६; हिसेभ्यः–भ८। सिंहेभ्यः–भ१.७-मॅ॥ ६०२. २५. [ २५ ] त्वं हरसा—ग त१.२.३.४.५.६.८-भ-मु। हरसा–त७-मॅ॥

[ १०. ८८. ] ६०३. २२. [ २ ] चौषधीः—ग१.२; ओषधीः–ग४; चोषधीः–त१. २.३.६.७-मु; वोषधीः–भ। वौषधीः–त४.५.८-मॅ॥ ६०४. ६. [ ४ ] समञ्जन्ति—ग-त-भ१. २.६.७-मु। समंजति–भ४-मॅ॥ ७. [ ४ ] स वैश्वानरोऽग्निः—ग-त-भ१.२.४.५.६.८-मु। वैश्वानरोऽग्निः–भ७-मॅ॥ ८ जगदित्यर्थः—§-मु। यज्जगदित्यर्थः–मॅ॥ ६०५. ६ [ ७ ] आभिमुख्येन जुहुवुः—त७-*मॅ। आभिमुख्येन आ जुहुवुः–ग१.२-त१.२.३.४.५.६.८-भ; आभिमुख्येनाभिजुहुवुः–ग४। आभिमुख्येन जुहुवुः–मु॥ १२ [ ८ ] अजनयन्त जनयन्ति—ग-त१. २.३.६.७-मु। अजनयंत–त४.५.८-भ-मॅ॥ ६०७. ३ [ १३ ] प्रयक्षम् इत्यादौ—*मॅ-मु। प्रयक्षतममित्यादौ–ग१.२; तदु प्रयक्षतमित्यादौ–ग४; प्रयतमिहादौ–त१.२.३.४.५.७; प्रयंतमिहादौ–त६; प्रयतमित्यादौ–त८-भ४.६; प्रयतत्यादौ–भ१; प्रत्ययमित्यादौ–भ२.८; प्रत्यक्षत्यादौ–भ७। ऋ. सं.२.५.१ अत्र 'प्रयक्षन्' इत्यस्य स्थाने 'प्रयक्षम्' इति भाष्यकारैः पठितं तद्वदत्रापि॥ २० [ १५ ] द्यावापृथिव्योर्मध्ये—ग-त-मु। द्यावापृथिवीमध्ये–भ-मॅ॥ ६०८. २ [ १६ ] उत मन्येऽहमेनमनयोर्हि—ग४-त४.५.६-भ६-*मॅ-मु। उत मन्येहमेनयोर्हि–ग२; उत मन्येदमेनमनयोर्हि–त१.२; उत मन्येहमेनसमयोर्गि–भ१; उत मन्येहमेनमसयोर्गि–भ४; उत मे हन्यमेनसमायोगे–भ७। अस्याः श्रुतेर्मूलं नोपलभ्यते॥ ५ विश्वा विश्वानि—ग-त-मु। विश्वानि–भ-मॅ॥ ६ मन्यन्ते—§-मॅ-मु. मन्यते–तै. सं.॥ [ १७ ] वेत्ति। अस्यानन्तरं 'इति' आवश्यकमिति मॅक्समुल्लरमहाशयाः॥

[ १०. ८९ ] ६०९. १९ [ १ ] वारकैः—ग-त-मु। वरेकैः ( = वारकैः )–भ। वरकैः–मॅ॥ २८ [ २ ] सर्गोऽश्वः। तम्। कृष्णा कृष्णानि—ग-त-मु। सर्गोऽश्वः तं कृष्णानि–भ। सर्गोऽश्वः। कृष्णानि–मॅ॥ ६१०. ७ [ ३ ] य इन्द्रः—*मॅ। इंद्रो–§-मु॥ यज्ञेषु—ग-भ२। यज्ञ यज्ञेषु–त१.२.३.७; यज्ञे यज्ञेषु–भ१.४.६.८-मु। यज्ञे यज्ञे–भ७-मॅ॥ १५ [ ४ ] य इन्द्रः—ग४-*मॅ॥ ६१०. २१ [ ५ ] ग्रावभिः—ग-भ। ग्रावादिभिः–त-मॅ-मु॥ २५ गुरूणि —§-मु। पुरूणि–मॅ ( मुद्रणदोषः ? )॥ ६११. २५ [ ८ ] उपद्रवाणि—§-मॅ-मु। नपुंसकलिङ्गप्रयोगश्चिन्त्यः॥ ६१२. १३ [ १० ] प्राज्ञानां—*मॅ। प्रज्ञानां–ग४-त१.६-भ२.८-मु; प्रज्ञानानां–त२.३.४.५.७; प्रजानां–भ१.७॥ २९ [ १२ ] पताकास्थानीयो—ग१। पातकास्थानीयो–ग२-त४.५। पताकात्स्थानीयो–भ७। पताकस्थानीयो–ग४-त१.२.३.६.७.८-भ१.२. ४.८-मॅ। ऋ. सं. १०.१.५ द्रष्टव्यम्॥ ६१३. १८-१९ [ १४ ] यत् यया हेत्या......यत् यया च शक्त्या। यद्यया हेत्या त्वमघस्य द्वितीयार्थे आहननभूतमेषद्युद्धार्थमागच्छद्रक्षो ।भिनदो-

भिनः यद्यदा ल शक्त्या–ग१.२; यद्यदा हेत्या त्वमघस्य द्वितीयार्थे षष्ठी अभूतमेघ्युषार्थमागच्छद्रक्षो भिनदोभिनः यद्यदा ल शक्त्या–ग४; यद्यदा च शक्त्या–त१.२.३.६.७.८-भ२.५.८। भ-१.४.६.७-पुस्तकेषु भाष्यांशो लुप्तः। यद्यया हेत्या त्वमघस्य द्वितीयार्थे षष्ठी अभूतमेषद्युद्धार्थ-मागच्छद्रक्षोभिनद्दो भिनदः यद्यदा च शक्त्या–त४.५। त४-पुस्तके 'यद्यदा च शक्त्या' इति पदसमूहे 'यद्यया' इति पूर्वं लिखित्वा अनन्तरं 'या' इत्यक्षरं हरितालेन विलिप्य 'दा' इति लिखितम्। यद्यदा हेत्या त्वमघस्य द्वितीयार्थे षष्ठी अहृतमेषद्युद्धार्थमागच्छद्रक्षो भिनदः अभिनत् यद्यदा च शक्त्या–*मॅ-मु। ग-त४.५-वर्जयित्वा सर्वेषु लिखितपुस्तकेष्वयं भाष्यांशो नोपलभ्यते। अतः केवलं ग-त-४.५-पुस्तकपाठानुसारेणात्र पाठोऽभ्यूहितव्यः। 'यद्यया हेत्या' इति पाठः ग-त४.५-पुस्तकेषूपलभ्यमानत्वात् समीचीनत्वाच्च स्वीकृतः। 'यद्यदा च शक्त्या' इति पाठे ग-त४.५-पुस्तकेषूपलब्धेऽपि 'यद्यया हेत्या' इति पाठानुसारेण 'यद्यया च शक्त्या' इति पाठः स्वीकृतः। त४-पुस्तके पूर्वं 'यद्यया' इति पाठ आसीदिति लिखितचरमेव। यया हेत्या त्वं शत्रून् हतवानसि यया च हिंसिताः शत्रवः भूमौ शेरते सा तव हेतिः कदा भविष्यतीति तात्पर्यम्। 'यद्यदा' इति पाठः उभयत्र सर्वथाबद्धः। 'अभिनः' इति पाठः 'भिनदः' इत्यस्य व्याख्यानत्वेनास्माभिः स्वीकृतः। ग१.२-पुस्तकयोस्तादृशः पाठ उपलब्ध एव। 'अभिनत्' इति मॅक्समुल्लरपाठः अभ्यूहितोऽपि पुरुषव्यत्ययेनाबद्धः। 'अभूतमेषत्' अस्य स्थाने 'अहृतमेषत्' इति पाठो मॅक्समुल्लरमहाशयैरभ्यूहितः। यद्यपि स न समीचीनस्तथाप्यनन्यगतिकत्वात् स एव स्वीकृतः। 'अघ' इत्यस्य 'आहन्तृ' इति व्याख्यानं प्रायः सायणभाष्ये आगच्छति। तदेवात्रापि युक्तं स्यादिति प्रतिभाति॥ ६१४. ७. [ १६ ] **शोभना**। शोभिता–ग१.२; शोचना–ग४–त-भ२.४.८। शब्दवती–भ७-मॅ-मु॥ १४. [ १७ ] **सुमतीनां सुमतीः**—ग-त४.५। सुमतीः–त१.२.३.६.७.८-भ। सुमतीनां–मॅ-मु॥ १६. **लभेमहि**—ग४-त४.५। लभेम–त१.२.३.६.७.८-भ२.४.८-मॅ-मु। लंभंत–भ७॥

[ १०. ९०. ] ६१६. २२. [५] **माययैव इति**—*मॅ। ययेवेति–त; ययेति-भ। माययेति-मु॥ ६१८. १. [ ९ ] **सामानि च**—त-मु। सामानि–भ-मॅ॥ २५. [ १२ ] **यत् यावूरू तद्रूपो**—मु। यद्यावुरू तद्रूपो–भ२.८; यद्यदोरू तद्रूपो–त२.४; यद्यदास्तद्रूपो–त१.६.७; यद्यदोस्तद्रूपो–त३; यद्यारू तद्रूपो–भ४; यातद्रूपो–भ७। यदूरू तद्रूपो–मॅ॥ २६ [१२] **ऊरुभ्यां**—ग१.२-मु। उरुभ्यां–त१.२-भ७। ऊरूभ्यां–मॅ॥ ६१८. २७ **ब्राह्मणादीनां**—§-मु। ब्राह्मणानां–मॅ॥ ६१९. २३ [ १५ ] **दधात्यादित्यो**—त४। दध्यात्यादित्यो–त२। दध्यादित्यादित्यो–भ-मॅ-मु॥ ६१९. २६ **°युक्तेध्मत्वेन**—ग-त४.५-मु। °युक्तेनधात्वेन–त१.२.३.६; °युक्तेनेध्मत्वेन–त७; °युक्तेधात्वेन–त८-भ२.४.८; °युक्तः धात्वेन–भ७। °युक्तेंधनत्वेन–मॅ॥

[ १०. ९१ ] ६२०. १३ **अग्निदेवत्यम्**—ग-त८-भ४। अग्निदैवत्यं–त१.२.३.४.५.६.७-भ२.७.८-मॅ-मु॥ ६२१. २ [ २ ] **आ क्षेति अभिगच्छति**—ग-त-मु। आ क्षेति–भ-मॅ॥ २०-२१ [ ४ ] **सूर्यस्येव यथा सूर्यस्य अरेपसः पापरहिता निर्गता रश्मयः दृश्यन्ते तद्वत् आ चिकित्रे प्रज्ञायन्ते**। सूर्यस्येव यथा सूर्यस्यारेपसः पापरहिता निर्गता ( निर्गत्वा–त१.२.६ ) रश्मयो ( रामयो–त१.२.६.७ ) दृश्यंते तद्वदाचिकित्रे ( तद्वदारिकित्रे–त१.६ ) प्रज्ञायंते ( आजा-

यंते–त१.६; आज्ञायंते–मु )–त१.२.६.७-मु । सूर्यस्य वारेपसः पापरहिता निमन्वा रश्मयो दृश्यंते तद्वदादिचिकित्र – – – ज्ञायते–ग४; सूर्यरश्मयः अरेपसः अपापाः आचिकित्रे आसमंतात् प्रज्ञायंते–ग१.२ । सूर्यस्येव – – – – मॅ इतरपुस्तकेषु च ।। २६-२७ [ ५ ] हे अग्ने तव श्रियः रश्मि-लक्षणा विभूतयः चित्राः विचित्राः चिकित्रे प्रज्ञायन्ते । तत्र दृष्टान्तः । वर्ष्यस्येव यथा वर्षितु-र्मेघस्य । हे अग्ने तव श्रियो रश्मिलक्षणा विभूतयश्चित्रा ( विभूतयाश्चित्र–त६ ) विचित्रा ( चिरित्रा त६; चिरिश्–त१; चिकित्रा–त२; ' विचित्रा ' नास्ति–मु ) श्चिकित्रे प्रजायंते । तत्र दृष्टांतः स्तोत्र-पर्यायवर्षितुर्मेघस्य ( ' तत्र दृष्टांतः स्तोत्रपर्याय ' नास्ति–त६ )–त१.२.६.७-मु । तव विभूतयः चित्राः चिकित्रे ज्ञायंते वि वर्ष्यस्येव यथा वर्षितुर्मेघस्य–ग१.२ । – – – यथा वर्षितुर्मेघस्य–मॅ इतर-पुस्तकेषु च । साम.२.३.२.७.१ भाष्यं द्रष्टव्यम् । यद्यप्यस्माभिः स्वीकृतश्चतुर्थपञ्चममन्त्रभाष्यभागो बहुषु लिखितपुस्तकेषु नोपलभ्यते तथापि तस्य मूलपाठत्वं संभवति । ' यथा ' इति पदस्य ' चिकित्रे प्रज्ञायन्ते ' इति पदद्वयस्य च सामान्येन भाष्यलोपः संजातो दृश्यते । दाक्षिणात्यलिपिलिखितपुस्तके-ऽपि स्वीकृतपाठसदृशः पाठ उपलभ्यत इति विशेषः । ' चिकित्रे ' इति पदस्य पुनरुक्तं समानं व्याख्यानं स्वीकृतपाठं द्रढयति । अरेपसः, चित्राः इत्येतयोः स्वीकृतपाठसदृशं व्याख्यानं ऋ. सं. ६. १७.२; २६.५; ९.६१.१६; १०.७८.१ अत्र द्रष्टव्यम् ।। ६२२. १६ [ ७ ] अन्ना—त-मु । अन्नानि–भ-मॅ ।। १७ काष्ठानि—ग-त-मु । काव्यानि–भ२.४.८ । काननानि–भ७-मॅ ।। २५ [८] चरुपुरोडाशादिके—ग२-त७-मु । पशुपुरोडाशादिके–ग४ । च पुरोडाशादिके–त१.२.३.४.५. ६.८-भ मॅ ।। ६२३. १५ [ १० ] अग्नित् नान्यः—ग२-*मॅ । अग्निः नान्यः–ग१-त१.२.३. ४.६.७-भ१.६-मु; अग्निः नन्यः–त८-भ४.८; अग्निः नग्निः–त५; अग्नि नान्यः–भ२; अग्नित् वान्यः–भ७ ।। ६२४. २६ [ १४ ] कीलालपाशब्दस्योभयथा व्याख्यातत्वात् ' सुरां पिबते ' इत्य-स्यानन्तरं ' यद्वा ' इत्येतादृशं पदमावश्यकम् ।।

[ १०. ९२ ] ६२५. १३ चातुर्विंशिकेन—ग४-*मॅ-मु । चातुर्विंशकेन–ग१.२-त-भ १.२.४.७.८; चातुर्विंशिकेहनि–भ६ । ऋ. सं. १. १६० सूक्तप्रस्तावना द्रष्टव्या ।। ६२६. ५ [३] विपणेः । 'वि पणेः' इति भिन्नः पदपाठः ।। ६२६. १५ [४] संबन्धिनमेनमग्निं—ग-त-मु । संबंधिनमग्निं–भ-मॅ ।। ६२७. ३ [ ६ ] अन्तरिक्षस्य—ग-त-मु । अंतरिक्ष°–भ-मॅ ।। १३ [ ७ ] पौंस्यं । ' पौंस्ये ' इति पदम् ।। ६२८. १५ [ १० ] कर्ममार्गान् वा—ग२ । काममार्गान् वा–ग४; कर्ममार्गानर्वा–त१.२.८; कर्ममार्गानर्पान–त६; कर्मयागानर्वा–त७; कर्मयागान् वा–भ १.२.४.६.८; कर्मयोग्यान् वा–भ७ । कर्मयोग्यान्–मॅ-मु ।। २३ [ ११ ] पत्नी—*मॅ । पत्नी पत्न्यौ–§ । पत्न्यौ–मु ।। ६२९. ६ [ १२ ] धिया बुद्धया अस्य—*मॅ । बुद्धया–ग-त१.७; बुध्न्या–त२.३.४.५.६.७.८-भ२.४.६.८ । धिया बुद्धया–मु ।। ६२९. ७ द्यौर्नहुषीयं...एष गर्भः इति वाजसनेयकवचनमन्वेषणीयम् ।। १६ [ १३ ] यागगमने—ग१.२-त१.२.३.५.७.८-मु । मागमने–ग४-भ; गमगने–त४; यागमने–त६.८ । गमने–भ७-मॅ ।। ' अभि अर्चत ' इति पदद्वयं न व्याख्यातम् ।। २२ [ १४ ] स्वयं समुपार्जितकीर्ति—ग१.२-भ२.७ । सं स्वशस्यमुपा°-ग४; स्वयशमुपा°–त-भ१.४.६; स्वयशामुपा°–भ८ । उपार्जितकीर्ति-मॅ-मु ।। २३ पत्युरपत्यान्तत्वेन—*मॅ । पत्युरपत्रागंतृत्वेन–ग१.२; पत्युपरतंप्रत्यन–ग४; पत्युरपत्यंतंत्रेन–त१.२.३.४.५.६; पत्युर-

पत्यंतंतन्वेन–त७; पत्युरपतंतन्वेन–त८-भ६; पत्युरयतंतत्वेन–भ१.२.४.८; यत्पुरयतत्वेन–भ७। पत्युरप्रत्युतत्वेन–मु ॥ २४ सहितां स्तुमः–भ७-मु। सह संस्तुमः–ग४-त४.५-भ६.८; सहसंस्तुमः–त१.२.३.६.७-भ१.२.४; सहसस्तुमः–त८। सह स्तुमः–मॅ॥ ६३०. १ [ १५ ] सन्—त-भ-मु। सन् अनेन–ग। स-मॅ॥

[ १०. ९३ ] ६३०. ६. सायणमते तान्वः पार्थः अस्य सूक्तस्यर्षिः। तथैवानुक्रमण्यामनुक्रमणीभाष्ये च। पञ्चदशमन्त्रे पार्थ्यशब्द आगतः। तत्रापि पार्थ इत्येव भाष्यकारैः पठितम्। अनुक्रमण्याः केषुचिल्लिखितपुस्तकेषु पार्थ्य इति पाठः। मु-पुस्तकेऽप्यनुक्रमणीपाठः पार्थ्य इत्येवोद्धृतः। तथा च मु-पुस्तके पञ्चदशमन्त्रभाष्ये पार्थ्य इति संहितावत् पठित्वा पृथेः पुत्रः इत्युक्तम्। सूक्तप्रस्तावनायां तु पृथोः पुत्रः इत्येव ॥ ६३१. १. [ ३ ] द्योतनादि°—ग-भ७-मु। द्योतमानां द्योतमानादि°–त१.२.३.६; द्योतमानानां द्योतमानादि°–त७। द्योतमानादि°–त४.५.८-भ१.२.४.६.८-मॅ॥ ६३१. ८. [ ४ ] अन्यो देवजनश्च—§-मॅ। देवश्च-मु॥ २५. [ ६ ] उरुष्यतां रक्षताम्–त१.८-भ। रक्षतां–ग४-त२.३.४.५.६.७-मु। उरुष्यतं रक्षेतां–मॅ॥ २७. गच्छति प्राप्नोति—ग-त-मु। प्राप्नोति गच्छति–भ-मॅ॥ ६३२. १४. [८] यागं प्रति शीघ्र°—ग१.२। प्रतिशीघ्र°–ग४-त-भ१.२.४.६.८-मु। अतिशीघ्र°-भ७-मॅ। मॅक्समुल्लरटिप्पणी द्रष्टव्या। 'यज्ञं प्रति शीघ्र°' इति स्यादिति स्वयं तैरेवोक्तम् ॥ २६. [ ९ ] रश्मिं न यथा रश्मिं चक्रादिकं—ग१। रश्मिं न यथा रश्मिः चक्रादिकं–ग२.४-त; रश्मिं चक्रादिकं–भ१.४.६; रश्मिं न रश्मिमिव चक्रादिकं--भ७। रश्मिं न यथा रश्मिचक्रादिकं--मु। रश्मिं न यथा चक्रादिकं--मॅ॥ ६३३. २१. [ १२ ] विस्तृतान् रश्मीन् वर्धयन्ति—*मॅ--मु। विस्तृतान् रश्मीन् सूर्यइव--ग१.२; विस्तृतान् रश्मीन् ( विस्तुताद्रश्मीन्--त१; विस्तृताद्रश्मीन्--त२.३.७; विसृतान् रश्मीन्--भ१.२.४ ) वर्धयंत--त-भ॥ २७. [ १३ ] स्तुतिरावबर्त—*मॅ। स्तुतिस्थारावबर्त वर्तते--ग१.२; स्तुतिः साराया ववर्तते--ग४; स्तुतिः सा ववर्त वर्तते--त१.२.३.६.७; स्तुतिः सा ववर्त ते--त४.५; स्तुतिः साराववर्त--त८-भ४.८; स्तुतिः सा राववर्त वर्तते--भ१.६; स्तुतिः सा राया ववर्त--भ२; स्तुतिराववर्तते--भ७। स्तुतिराववर्त वर्तते--मु॥ ६३४. ८. [ १४ ] वा विशेषेण—ग१.२-त-भ४.६.८--मु। ना विशेषेण--भ१.२। नानाविशेषेण--भ७-मॅ॥

[ १०. ९४ ] ६३५. २८ [४] शब्दायन्ते—ग-भ४.५.६.८। शब्दायंति–त; शब्दयंते–भ१.२; शब्दयंति–भ७-मु। शब्दं कुर्वंति–मॅ॥ ६३६. २६ [ ७ ] बन्धनसाधनभूता—त-भ२-७। बंधकसाधनभूता–ग४; बंधसाधनभूता–ग१.२-भ६.८; बंधसाधसाधनंभूता–भ१.४। बंधने साधनभूता–मॅ-मु॥ ६३७. १६ [ ९ ] सोमादः—ग१.२-त३.४.५। ते सोमादः–ग४-त१.२.६.७.८-भ-मॅ-मु। 'ते' इति प्रतीकमग्र आगतमेव॥ १७ 'गवि अधि अधिषवण°' इति साधु इति मॅक्समुल्लरमहाशयाः। गवि गव्ये अधिषवण°-मु॥ ६३८. १४ [ १२ ] सदांस्यात्मना न युञ्जते—ग१.२-त३.४.५.७-मु। न युंजते सदांस्यात्मना–मॅ॥

[ १०. ९५ ] ६३९. २६ शप्तवन्तौ मनुजभोग्या—ग-भ६-*मॅ-मु। शप्तवंतौ मनुजोभोग्यां–त१; शप्तवंतौ मनुजौभोग्यां–त७; शप्तवंतौ मनुजभोग्यां–त२.३.६-भ१.२.८; सपूर्वतौ मनुजभोग्यां–त४.५; शप्तवंतौ मनुजभ्योग्या–भ४; शप्तवंतौ मनुजोभाग्यं–भ७॥ ६४०.१ सोमपुत्रा-

ज्जातो—§-मु। सोमसुताज्जातो–मॅ॥ तमुर्वशी तु—ग-भ४-*मॅ-मु। तमुर्वशीति–त१.२.३.६.७.८-भ१.२.६.७.८; तमुर्वशी क–त४.५ ॥ २ तत्पादन्यत्र—त२.३.६.८-*मॅ-मु। तदान्यत्र–ग-त४.५-भ१.२.७.८; तत्पादन्यंत्र–त१; रतादन्यत्र–भ४; यदान्यत्र च–भ६ ॥ ३ °रुरणकद्वयं—भ२-*मॅ-मु। °रुणकद्वयं–ग१.२; °रुरुणकद्वयं–ग४-त२.३.६.७.८-भ१.६.७.८; °रुरुणकद्वहतं–त४.५; °ररुणकद्वयं–त१-भ४ ॥ ८ साश्रं सापश्यदुक्ता—*मॅ। साश्वं सापश्यदुक्ता–त१.२.३-भ२; ससापस्य उक्ता–त४.५; साश्वं सापश्यदुक्त्वा–त६.७; साश्वां सापश्यदुक्ता–त८; साश्वः सापश्यदुक्ता–भ१.४.६.७.८। साश्रं सापश्यदुक्त्वा–मु ॥ ६४१. ७ [ २ ] तथाहमपीति—ग१.२-त४.५-भ२। अहमपीति–ग४-त१.२.३.६.७.८-भ८-मॅ-मु ॥ ८ माता मय्यभिलाषं—ग४-भ१.२.६.८। मय्यभि°–त१.२.६; मय्यभिलाषं मा–त३.७-मु; मामप्यभि°–त४.५; मा माभि°–त८। मा ममाभि°–मॅ ॥ ९ स्वस्या—ग-त१.२.४.५.६-भ४-मु। तस्या–त८-भ१.६-मॅ ॥ १९ [ ३ ] मत्सामर्थ्यं—ग१.२-त३.४.५-भ१.२.४.६.८-मु। नत्सामर्थ्यं–ग४; न तत्सामर्थ्यं–त७; तत्सामर्थ्यं–भ७। न मत्सामर्थ्यं–त१.२.६.८-मॅ ॥ २० भटा—ग.त५.७.८-भ२.४.५.८। भवन–त१.२.३.६; भ–त४। नरा–भ१.७-मॅ-मु ॥ ६४२. १ [ ४ ] यच्छ्वशुरस्य—*मॅ-मु। यस्य श्वशुरस्य-ग-त-भ२; यस्य श्वरस्य–भ१.६; यश्व्यसुरस्य–भ४; यस्येश्वरस्य–भ७ ॥ ६४४. ४ [१०] कर्मसु कर्मवान् वा। कर्मसु–मॅ-मु। ऋ. सं. ३.६०.३; ५.४२.१२; ९.७२.६ इ. द्रष्टव्यम् ॥ १२. [ ११ ] भूमे रक्षणाय—ग-त-मु। सूरेक्षणाय–भ१; सूरे रक्षणाय–भ२.४; मे क्षणाय–भ६; सूरक्षणाय–भ७; भूरे रक्षणाय–भ८। भूरक्षणाय–मॅ ॥ १३ पुनस्तदेवाह—ग१.२-भ५.६। पुत्रदेवाह–ग४-भ७; पुत्र एवाह--त; पुत्रवदेवाह--भ१.२.४.८। पुनर्देव्याह--मॅ-मु ॥ १६ शिक्षितवत्यस्मि—*मॅ-मु। शिक्षितवानस्मि--§ ॥ १८ वदेर्लेट्याडागमः--ग१.२। वदेतेद्यागमः--ग४; °लट्या°--त३.७; °लिंट्या°--भ८; °लॅट्य°--त१.२.४.५.६.८-भ१.२.४.६.७-मॅ-मु ॥ [ ११ ] एडकद्वय°–ग-त८-भ२.५.८-मु। एकद्वय°--त१.२.३.४.५.६.७; एडकवालकद्वय°--भ१; एकलकद्वय°–भ४; पलकद्वय°–भ६। एडकवाःक°--मॅ॥ ६४५.१८ [१३]अमादेशः—ग२। अणादेशः–ग४। आमादेशः--त-भ-मॅ-मु ॥ २६ [१४] असमर्थः—ग-भ। समर्थः सन्--त-मु। समर्थः--मॅ ॥ ६४६. १२ [१५] एता एतानि—ग२-त। एतानि--ग४-भ-मॅ-मु ॥ १३ तेषां हृदयानि यथा—ग-त१.२.३.६.७-मु। तेषां यथा--त४.५। यथा--त८-भ-मॅ ॥ २१ [१६] प्ररमयित्रीः—ग-त-भ१.२.४.६.८। परमयित्री--भ७। पूरयित्रीः (?)--मॅ-मु ॥ ६४७. ७ [ १८ ] यजासि। 'यजाति' इति संहिता ॥

[ १०. ९६. ] ६४८. ५. [ २ ] नवप्रसूता—त८-भ-मु। प्रसूता–त१.२.३.६.७। नवप्रसूतिका–ग-त४.५-मॅ ॥ पुरस्तादुपाचारो—ग-त-भ८। °दुपचारो–भ१.२.६.७-मॅ-मु ॥ १६. [ ३ ] रूपाणि सर्वाणि–§-मु। रूपाणि-मॅ ॥ ६५०. २७. [ १० ] हे इन्द्र हर्यतः—ग-त१.२.३.६.७.८-भ-मु। हर्यतः–त४.५-मॅ ॥ ६५१. १५. [१२] प्रापयन्तु–§-मु। प्रापयंतु प्रवहंतिˉमॅ ॥

[ १०. ९७ ] ६५२. १२. [ १ ] ओषधीः ओषधयः—ग-त-मु। ओषधयः भ-मॅ ॥ १८. सोम्या ओषधयः औषधः पुरुषः—ग१-त३-*-मॅ-मु। इतरपुस्तकेष्वबद्धाः पाठाः॥ ६५३. २६. [५] शप्चेति द्विविकरणता–*मॅ। शप्चेति विकरणता–मु। लिखितपुस्तकेष्वबद्धाः पाठाः ॥

६५४. ३. [ ६ ] ब्राह्मणः सः—ग४-त१.२.३.६.७.८-भ-मु। ब्राह्मणः अ--त४.५। ब्राह्मणः–मॅ॥ ६५५. १२. [ ११ ] शकुन्यादीनां—ग१.२-त३.७.८-भ५-मु। कुशन्यादीनां–भ१.२.४.८; कुशलादीनां–भ६; शकुन्यानां–भ७। शकुनादीनां–ग४-त४.५-*मॅ॥ ग्राहकाद्व्याधात्--ग-*मॅ-मु। ग्राहकाव्याधात्–त१.२.३.७.८; ग्राहकात् व्याध्यात्–भ६; ग्राहकाव्योधात्–भ१; ग्राहकाव्यात्–भ४; ग्रहकोवाधात्–भ७॥ १९. [ १२ ] समनन्तरशत्रून्—ग४-त-भ१.४.७.८; सामन्त°–ग२। समनंतर°–भ२.६-मॅ-मु॥ २६. [१३] गत्या वेगेन—ग१.२-त१.२.३.६.७.८-भ१.२.७.८-मु। गत्यनेन–ग४; गत्वा वेगेन–भ६। गतिवेगेन–त४.५–मॅ॥ ६५६. १३ [ १५ ] भ६-लिखितपुस्तकं पञ्चदशमन्त्रभाष्यान्ते समाप्तम्॥ ६५८. १४. [ २३ ] अभिहिनस्ति—ग-त-मु। भिहिनस्ति–भ१.४.७.८। हिनस्ति–भ२-मॅ॥

[ १०. ९८ ] ६५९. १७ [ ३ ] तां वाचमिति—ग-त१.२.३.६.७.८-भ-मु। वाचमिति--त४.५-मॅ॥ ६६१. १२ [ १० ] सति आहुतानि—मॅ-मु। सति आहूतानि ?॥ २१ [ ११ ] कुरुकुलजातमपि—*मॅ-मु। एतत्कुलजातमपि शंतनुमपि भूताकुलं वाजमपि--ग१.२; भूतकुलजालमपि--ग४; भूताकुलाजालमपि--त१.६.७.८; भूताकुलजालमपि--त२.३-भ; भूताकुलजातमपि--त४.५। 'उलकुलजातमपि' इति मॅक्समुल्लरमहाशयैः संभावितम्॥ २६ [१२] 'मृधः' इति पदं भाष्यकारैः न व्याख्यातम्॥

[ १०. ९९ ] ६६२. २३ [ २ ] युक्तः सन्—ग-त-मु। युक्तः--भ-मॅ॥ २४ माया आसुरी ऋते—*मॅ। माया आसुरीः ऋते--ग१.२-त१.२.३.६.७.८-भ-मु; मांदा आसर्यः ऋते--ग४; माया आसुर कृतेन–त४.५। भाष्यकारैः 'मायाः' इत्यस्य स्थाने 'माया' इत्येकवचनान्तं पठितम्॥ ६६३. ३ [ ३ ] संग्रामे—ग४-*मॅ-मु॥ ४ शतदुरस्य शतद्वारस्य—ग-त१.२.३.६.७-मु। शतदुरस्य–त४.५-मॅ॥ ६६४. ७ [ ६ ] व्यहन्। 'हन्' इति संहिता॥ २७ [ ८ ] लम्भयन्। न इति—ग४-*मॅ। लंभयतु न इति–ग१.२; लभयन् न इति–त१.२.३.६.७; अविदत् अलभत–त४.५-मु; लभयत इति–त८; लंबयन् इति–भ७॥ ६६६. १३ [ १२ ] 'इन्द्रम्' इत्यस्य स्थाने 'इन्द्र' इति सायणाचार्यैः पठितं दृश्यते॥

[ १०. १०० ] ६६६. २० त्वन्त्या त्रिष्टुप्। तु त्रिष्टुबन्तं–अनु.॥ ६६८. २८. [ ८ ] सवितृदेवोऽस्माकं—ग-त१.२.३.६.७। सवितृदेवो नोस्माकं–त४.५.८-भ-मु। सवितृदेवतास्माकं–मॅ॥ ६६९. १५. [ १० ] अङ्ध्वे—त१.२.३.६.७-*मॅ-मु। अङ्ध्वे–ग१.२; अङ्वे–ग४-भ१.४.८; अङ्गध्वे–त४; अग्ध्व–त५; अङ्ध्व–त८॥

[ १०. १०१ ] ६७१. १३ [ ३ ] 'सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे' इत्यापस्तम्बवचनमन्वेषणीयम्॥ २९ [ ५ ] °कर्षणार्थगोपानसाधनद्रुममयपान°—*मॅ। °कर्षणार्थं गोपानसाधनं द्रुममयपान°–ग-त१.२.३.६.७.८-भ। °कर्षणार्थगोपानसाधनमुपपयमाने°–त४.५। °कर्षणार्थगोपानसाधनद्रुममयपान°–मु॥ द्वितीयपादस्य व्याख्यानं लुप्तम्। ग४-पुस्तकस्थं द्वितीयपादव्याख्यानं पादटिप्पण्यां दत्तम्॥ ६७२. १ पित्त्वेनाङ्त्वित्वात्—ग-त। त्वेनाङ्त्वित्वात्–भ८; पत्वेनाङ्त्वित्वात्–भ१.४। तेनाङ्त्वित्वात्–मॅ-मु॥ ३ कदाचिदपि—ग४-त१.२.३.७-मु। कदाचित्–भ-मॅ॥ ६ [६] कीदृशमवतं—ग-त-भ८-मु। कीदृशमवटं–भ१.२.४.७-मॅ॥ २२ [७] अश्वं रथं—§-मु।

अश्वरयं–मॅ ॥ ३० **कूपरूपकव्याजेन**—ग-त१.२.३.६.७.८-भ१.४ । कूपव्याजेन–भ७ । कूपरूप-व्याजेन–त४.५-भ२.८-मॅ-मु ॥ ६७३. २५ [९] **अपि वा**—ग२.४-मु । अपि वो–त-भ१.२.४ । अपि च–मॅ ॥ अपि चा–भ७ ॥ ६७४. ५ [ १० ] **ईम् एनं**—ग-त४.५.८-भ । एनं-त१.२.३.६.७-मॅ-मु ॥ १० **प्रति**—ग४-*मॅ । प्र–त४.५ । 'प्रति' नास्ति मु इतरेषु च ॥ 'वह्निम्' इत्यस्य स्थाने ' वह्नी ' इति भाष्यकारैः पठितम् ॥ ११ **°हलविषयतया**—ग-त१.२.३.४.५.६.७-भ-मु । °हलाविषयतया–त८-मॅ ॥ १६ [११] **धुरौ आपिब्दमानः आपिशब्दमानः वह्निः हविर्वाहको**—*मॅ । धुरो वा आपिब्दमानो वह्निः वाहको–ग१.२; धुरौ वा आपिब्दमानो वह्निर्वाहको ( °र्वाहका –त१.७ )–ग४-त१.२.६.७.८; धुरावापिशब्दमानो वह्निर्वाहको–त४.५; धुरौ वा आपिब्दमानः हविर्वाहको–भ१.२.४.८; धुरौ चा अपिशब्दमानः हविर्वाहनको–भ७ । धुरौ आपिब्दमानः आशब्दमानो वह्निर्वाहको–मु ॥ १९ **स्थापयतासन्द्याम्**—ग१.२-*मॅ-मु । °त सत्यां–ग४; °तासद्यां–त१.२; °त संद्यां–भ१; °त संद्यां–भ४; °तसद्यां–भ७ ॥ २१ **धुरावापिब्दमानोऽपिशब्दमानो**—*मॅ । धुरावापिब्दमानो–ग१.२-त७; धुरावापब्दमानो–ग४; धुरावपिशब्दमानो–त१.२.३.६.८; धुरावपि पिशब्दमनो–त४.५; धुरौ अपिशब्दमानो–भ१.२.४.८; धुरावपिशब्दौ–भ७ । धुरौ अपिब्दमानः शब्दमानो–मु ॥

[ १०. १०२ ] ६७५.८. **भर्म्यश्वपुत्रो**—त२-*मॅ । भर्म्याश्वपुत्रो–ग१.२-त३-मु । भाम्यन्श्वपुत्रो–ग४; भार्म्याश्वपुत्रो–त१; भार्म्यश्वपुत्रो–त७-भ४.७.८; भ्रार्म्यश्वपुत्रो–भ१.२ ॥ **ऋषभेण द्रुघणेन** । द्रुघणेन ऋषभेण–अनु. ॥ १२. **चोरमार्गानुसारकः**—ग-त१.२.३.४.५.६.८-*मॅ । चोरमार्गोनुसारकः–त७-भ१.२.७.८; चोरमार्गोनुवारकः–भ४ । चौर°-मु ॥ ६७७. १. [ ५ ] **°चणकादिभक्षकम्**–ग४-त१.२.३.६.७-मु । °चरणकादि°–त८-भ१.२.४.८;°चरणादिक°-भ७ । °चर्वणादि°–त४.५-मॅ ॥ २४. [ ७ ] **उत् उत्कृष्टम्**—त१.२.३.७-मु । उत्कृष्टं–ग४–भ । उदावन् उत्कृष्टं-मॅ ॥ ३१. [८] **वध्रौ**—त१.२.३.७-भ८-मु । वाधौ–भ१; वधौ–भ२.४; शर्धौ–भ७ । वध्न्यां–मॅ ॥ ६७९. ६. [ ११ ] **°प्याडागमः**—ग१.२-त१.२.३.७.८-भ१.२.४.८-मु । °प्यडागमः–ग४-त४.५.६-भ७-मॅ ॥ **अश्नोतेर्वा लिटि तलोपः**—ग-त१.४.५.६-भ२.८ । अश्नोतेर्वा लिटि नलोपः–त२.३.७-मु; अश्नोतेर्लिटि वा तलोपः–त८-भ१; अश्नोतेर्लिटि वा लोपः–भ४; अश्नोतेर्लेटि वा तलोपः–भ७ । अश्नोतेर्लिटि वा णल्लोपः–मॅ । ऋ. सं. १०. १०४. ६. द्रष्टव्यम् ॥ ६७९. १९. [ १२ ] **त्वया दृष्टया**—ग४-त१.२.३.६.७.८-भ । त्वया दृष्टा–ग१.२ । त्वया–त४.५-मॅ-मु ॥

[ १०. १०३ ] ६८०. ६. [ १ ] **हन्तेः पचाद्यचि**—ग१.२-त१.२.६.७-भ१.२.४.८-मु । हंतः पचाद्यचि–त३.८-भ७ । हंता पचाद्यच्चि–त४.५-मॅ ॥ २०. [ २ ] **तत् शत्रुबलं**—ग४-त४.५-मु । तत्शत्रुं बलं–ग१.२; त्शत्रुबलं–त१.२.३.६.७-भ; तशत्रुबलं–त८ । शत्रुबलं–मॅ ॥ ६८१. १. [ ३ ] **भवन्तीत्यर्थः**—त१.२.३.६.७-भ-मु । भवती°–त४.५.८-मॅ । इषवः वृथा न भवन्तीति तात्पर्यम् ॥ ७. [ ४ ] **गतिकर्मा**—ग-त-मु । गच्छतिकर्मा–भ-मॅ ॥ २८. [ ६ ] **जयन्तं**—ग४-त१.२.३.६.७.८-भ-मु । जयंतं शत्रूनभिभवंतं-त४.५-मॅ ॥ ६८२. १६. [ ८ ] **अस्मत्सहायार्थं**—§-मॅ-मु । ' °त्साहाय्यार्थम् ' इति भाष्यमिति मॅक्समुल्लरमहाशयाः ॥ २६ [ ९ ]

**भुवनानां च्यावयितॄणां**—ग-त१.२.३.६.७-भ१.२.४-मु। च्यावयितॄणां–त४.५-भ७.८-मॅ॥ 'जयताम्' इति न व्याख्यातम्॥ ६८३. ४. [१०] **सैनिकानां**—ग१.२-त१.२.३.६.७-भ२-८-मु। प्रीतिकानां-भ१.४; प्रीतिकामानां–भ७। सेवकानां–ग४-त४.५-मॅ॥ ६८३. १७. [१२] **विमोहयन्ती सती**—ग-त-मु। विमोहयंती–भ-मॅ॥ 'परेहि' इति न व्याख्यातम्॥

[१०. १०४] ६८५. १२. [४] **शक्तिवन्निन्द्र**—§-मॅ-मु। 'शक्तिमन्निन्द्र' इति शुद्धम्॥ **यज्ञमहर्जानन्तः**—*मॅ-मु। महूजाज्ञानंतो–ग१.२; यज्ञं षष्ठमहर्जानन्तो–ग४; यज्ञं महर्जानंतो–त१.२.३.६.७-भ; यज्ञं महर्यातं यातगितांगिरसः–त४.५; यज्ञमहर्जानंस्तांगिरसः–त८॥ ६८६. ५. [६] **तप्रत्ययस्य**—ग-त१.२.३.६.७.८-भ। सुप्रत्यस्य–त४.५। तत्प्रत्ययस्य–भ२-मॅ-मु। ऋ. सं. १०.७०.९; १०३. ११ द्रष्टव्यम्॥ ६८७. ३. [९] **वृत्रहत्यायां मेघहनने**। वृत्रहत्याय मेघहनने–ग१.२; वृत्रहत्यायां मघहन–ग४; वृत्रहत्याय मेहवमे–त१.२.३.६.७-भ२.८; वृत्रहत्यायां मे हवं–त४.५; वृलहत्याय मेहेवमे–त८; वृत्रहत्याय मे–भ१.४; वृत्रहत्याय–भ७। वृत्रहत्यायां–*मॅ-मु॥ १४. [१०] **शक्रः शक्तः**—ग२.४-त१.२.३.४.५.६.७-भ२.८-मु। शक्रः–त८-मॅ॥

[१०. १०५] ६८७. २१ **ऐन्द्रम्**। **कुत्सपुत्रो**—ग१.२-त१.३.७-भ१.२-मु। ऐंद्र-कुत्सपुत्रो–त२.६.८-भ४.७.८-मॅ॥ २२ **स ऋषिः**—§-मु। ऋषिः–मॅ॥ २४ **शिष्टाः सर्वाः**—ग। शिष्टाभिः सर्वाभिः–त-भ-मॅ-मु॥ ६८८. २१ [२] **केशिना केशिनौ**—ग१.२-त१.२.३.६.७-मु। केशा केशिनौ–ग४। केशिनौ–त४.५-भ-मॅ॥ ६८९. २४ [६] **प्रास्तौत् प्रस्तौति**—ग४-त-भ२.४.५.८-मु। प्रास्तौति–भ१.७। प्रास्तौत्–मॅ॥ ६९०. २३ **तद्वती**—*मॅ। यद्वती–त१.२.३.६.७; द्विती–त४.५; यद्वदती–त८-भ१.२.४.८; यद्वा–भ७-मु॥ 'विश्वायुस्तन्वम्' इत्यस्य स्थाने 'विश्वाभिस्तनुम्' इति भाष्यकारैः पठितम्॥ ६९१. १ [९] **प्रीयमाणः**—त-भ१.२.४.८-मु। प्रीयमाणो वा–भ७-मॅ॥ ९ [१०] **दर्विः अपि अरेपाः**—त१.२.३.७-भ२.७। दर्विरप्यपरेपाः–भ१.४.८। दर्विररणिररेपाः–मॅ-मु॥

[१०. १०६] ६९२.६. ग४-लिखितपुस्तकं १०५ सूक्तान्ते समाप्तम्॥ **अश्विदेवत्यम्**—ग४-त-भ१.४.७.८-मु। °दैवत्यं-भ२-मॅ॥ ८ **तिरिक्तोक्थ**—त४.५.७.८-भ१.२.४.८-मु। °तिरिक्तोक्त्य–ग४; °तिरिक्तोत्थ–त१.२.३.६; °तिरिक्तोक्य–भ७। °तिरिक्तोक्थ्य–मॅ॥ १८ [१] **अपसा अपस्विनौ**—ग४-त१.२.३.६.७-भ-मु। बाह्यसा अपस्विनौ–त४; अपबाह्यसा अपस्विनौ–त५। अपस्विनौ–त८-मॅ॥ २३ **लङि**—ग४-त१.२.३.६.७.८-भ। लटि–त४.५। लुङि–मॅ-मु॥ ६९३. ४ [२] **प्रायोगेन प्रायोगौ**—ग४-भ१.२-मु। प्रायोगेन प्रायोगो–त१.२.३.६.७.८; प्रायोगेन प्रयोगो–त४.५-भ४। प्रायोगेव–भ७-मॅ॥ ६९३. ११ **नापगच्छतः**—ग४-त-मु। आगच्छतः–भ७। अपगच्छतः–भ१.२.४.८-मॅ॥ ६९४. ९ [४] **भवार्थे**—त-मु। तवार्थे–ग४। भावार्थे–भ-मॅ॥ २२ [५] **भवे**—त५.८। भावे–ग४-त३.४.६.७-भ२.८-मॅ-मु॥ **शिम्बाता शिम्बातौ**—त७-भ१.२.८-*मॅ-मु॥ २३ **हेतुना आतं व्याप्तमिति**—भ७। हेतुनातितं व्याप्तमिति–मु। हेतुनातितं प्राप्तमिति–*मॅ। हेतुना आतं व्याप्तव्यमिति–त१.२.३.७.८-भ१.२.४.८; हेतुना आतं प्राप्तव्यमिति–त४.५॥ **सहावस्थानात्**—ग४। सहावस्थानान्–त५; सहवेख्या-

तान्–त४;  सहावस्थितान्–त१.२.३.६.७.८-भ१.२.४.८ । सहावस्थित°–भ७-मॅ-मु ॥ ३१ **सुखकरत्वस्य विवक्षितत्वेन**—*मॅ-मु । सुखकरत्वस्य विवक्षितत्वे–ग४-त१.२.३.६.७.८; सुखस्य विवक्षितत्वेन–त४.५; सुखकरन्वक् विवक्षितन्वे–भ४ ॥ ६९५. ७ [ ५ ] **पुरीषं पुष्णातेः पोषयतेर्वा** । 'पुरीषं पृणातेः पूरयतेर्वा' इति निरुक्तपाठः ॥ २२ [ ६ ] **तुर्फरी**—त६. ७-भ१.२-*मॅ-मु । तूर्फरी–त१.२.३.८-भ१.४.८; तुफरी–त४.५ ॥ २५ **अस्मादीकनि**—*मॅ-मु । अस्माकन्–ग४; अस्मादिति–त१.२.३.७.८; अस्मादिति–त४.५; अस्मादितीष्–त६ ॥ २७ **उदन्नादेशः**—ग४-*मॅ । उदन्यादेशः–त१.२.३.५.६.७.८-भ-मु; उदनादेशः–त४ ॥ **रत्ने इव**—भ१.२-*मॅ । रत्नेर्वंश इव–ग४; रत्ते इच–त१; तन्ते इच–त२.३.७; रत्रे इव–त४.५; रन्ते इव–त६; रत्रे इच–त८; रत्ते इव–भ४.८; रत्नेव–भ७ । जाताविव–मु ॥ ६९६. ११ [ ७ ] **वायुर्न वायुरिव**—त४.५-भ२.५.८ । वायुरिव–त१.२.३.६.७.८-मॅ-मु ॥ २८ [८] **आह्लादकं**—त४.५-भ२-मु । आह्लादिकं–त१.२.३.६.७.८-भ१.४.७.८-मॅ ॥ ६९७. ८ [ ९ ] **स्मरतेर्लेट्याडागमः**—त३.७.८-भ२.८-मु । स्मरतेर्त्येण्याडागमः–त२-भ१.४; स्मरतेर्याडागमः–भ७; स्मरतेर्लेव्यडागमः–त४.५.८-मॅ ॥ ६९८. ५ [११] **गोरूधस्य°**—*मॅ । गोरूप्यस्य°–ग४; गोरूपस्य°–त१.२.३.६.७.८-भ१.२.४.८; °रथं धनं वोचतः स्व–त४.५; गोरूपस्यांतस्थितं–भ७ । गोरूधस्यन्तःस्थितं–मु ॥ ८ **आ अप्राः**—त४.५ । विलिप्राः–ग४ । अप्राः–त१.२.३.६.७.८-भ२.८-मॅ-मु ॥

[ १०. १०७ ] ६९८. २३ [ १ ] **चैत्रमासे तयोरिन्द्रः** । किमस्य मूलम् ? ऋ. सं. ३. ३४.१ मन्त्रे 'चैत्रमासे तपेदिन्द्रः' इति स्मृतिरुद्धृता ॥ ६९९. १५ [ ३ ] **पालिनी** । मॅक्समुल्लरटिप्पणी द्रष्टव्या ॥ १९ [ ३ ] **हविर्भिश्च**—त-भ१.४.७.८-मु । हविर्भिर्वा–भ२-मॅ ॥ ३० [ ४ ] **एतौ**—त१.२.३.६.७.८-भ-मु । तौ–त४.५-मॅ ॥ ७००. २७ [ ६ ] **लित्स्वरः**—त१. २.३-भ-मु । लिट्स्वरः–मॅ ॥ ७०१. २६ [ ९ ] **अनाहूयमानाः**—त१.२.३.६.७.८-भ-मु । आहूयमानाः–त४.५-मॅ ॥ ७०२. ३ [ १० ] **शरीरावयवविशेषशोभया**—त१.२.३.७-मु । शरीरावसंनिवेविशेषशोभया–भ । शरीरावयवशोभया–मॅ ॥ ८ **देवमानमिव देवयानमिव**—त४.५-भ१.४.५.७ । देवमानेव देवयानेव–त१.२.३.६.७.८-भ८; देवमानेव देवमानमिव देवयानमिव–भ२ । देवमानमिव–मॅ ॥

[ १०. १०८ ] ७०२. २६ [ १ ] **°र्निगूळ्हा गा**—त७-*मॅ । °र्निर्दूढा गा–त१.३. ८-भ१.४.८; °र्निरूढा गा–त२-भ२; °र्निगच्छते–त४; °र्निर्गूढा गो–त६; °र्निगूढा गा–भ७-मु । °र्निरूळ्हा गा–अनु. ॥ [ ३ ] उत्तरार्धे कानिचित्पदान्यव्याख्यातानि ॥ ७०४. ६ [ ४ ] **हिनस्त्येव**—§-मु । हिनस्त्वेव–मॅ ॥ ७०४. २३ [ ५ ] **को वा**—ग-त१.२.३.६.७.८-भ-मु । को नाम–त४.५-मॅ ॥ ७०५. ३ [ ६ ] **जसः सुः**—ग१.२ । जसः–त२-भ१.४; जसः स–त४. ५ । जसः शः–मॅ-मु ॥ ६ **सुखयेत्**—ग१.२-त४.५-भ७ । सुखयत्–त२.६.८-भ१.४ । सुखयतु –मॅ-मु ॥ ७ **लेटयाडागमः**—ग-त१.२.३.६.७-भ-मु । लेटयडागमः–त४.५-मॅ ॥ १६ [ ७ ] **अतोलोप°**—ग२-मु । अतो लोपौ°–त१.२.३.६.७.८-भ२.४.८; अनो लोपौ°–भ१.७ । आतो लोप°–त४.५-मॅ ॥ २६ [ ८ ] **उदतिष्ठन्**—ग२ । दतिष्ठुन्–त१.३.६.७.८-भ१.२.४; दतिष्ठन्

–त४.५; अतिष्ठन्–त२; द्धतिषुन्–भ७; दितिषुन–भ८। अध्यतिष्ठन्–मॅ-मु। ऋ. सं. १.३३.६; १०. ६१. १० द्रष्टव्यम् ॥ ७०६. ९ [ ९ ] **समूहापेक्ष्यैकवचनम्**—ग-त-भ२.८-मु। समूहा-पिक्षेरेक°–भ४; समहापेक्षएक°–भ७। समूहापेक्षैक°–मॅ ॥ २० [ १० ] **छद अपवारणे**—त१. २.३.६.७.८-*मॅ-मु। छद आवरणे–ग-त४.५; छद अपवारेण–भ१; छंद अपवारणे–भ४; छद आपवारणे–भ७ ॥

[ १०. १०९ ] ७०८. १० [ ३ ] **ग्रहीतव्यमेव**—त४.५। गृहीतव्यमेव–त३.६.७.८-भ२.८-मॅ-मु ॥ ७०९. २१ [ ६ ] **अव्यवहार्यत्व°**—भ४-मु। अव्यवहार्यत्व°–त१.२.३.६.७.८-भ२.८। अव्यवहार्य°–त४.५-भ१.७-मॅ ॥

[ १०. ११० ] ७१०. ३० [ २ ] **स्वादय**—त-भ८। स्वादयस्व–मॅ-मु ॥ **स्वादूकुरु**—*मॅ। स्वादुकुरु–ग-त-भ-मु। ७११. १० [ ३ ] **स त्वं**—ग२-त४.५-भ-मु। स त्वं देवं–त१. २.३; स त्वं देव त्वं–त६.८; स त्वं त्वं–त७। स त्वं देव–मॅ ॥ ७१२. १४ [ ६ ] **उषासानक्ता उषाश्च**—ग१.२-त४.७। उषसानक्तोषश्च–त३.५.६.८-भ२.८-मॅ-मु ॥ १६ **कीदृश्यौ**—ग१. २-त४.५-भ१.२.५.८। किदृश्यो–त१.३.७.८; कीदृश्यो–त२.६; किदृश्यौ–भ१.४। कीदृश्ये–मॅ-मु ॥ ७१३. ६ [ ८ ] **आ एतु**—ग१.२। एतु–त-भ-मॅ-मु ॥ ७ **जानाना**—ग१.२-त१.२.३. ६.७.८-भ२.५.८-मु। जाना–भ१.४; जनानां–भ७। जानती–त४.५-मॅ ॥ २२ [ ९ ] **जाना-नस्त्वं**—त-भ-मु। जानंस्त्वं–मॅ ॥ ७१४. ४ [१०] **स्वादूकुर्वन्तु**—ग२। स्वादूं°–त५। स्वादं° –त३.४.६.७.८-भ२.८-मॅ-मु ॥

[ १०. १११ ] ७१४. १६ **दशाष्ट्रादंष्ट्रः**। 'दशाष्टादंष्ट्रः' इत्यनुक्रमणीपाठः ॥ २२ [ १ ] **बुद्ध्यतु°**—ग१-*मॅ-मु। बुद्धयानु°–ग२-त-भ ॥ ७१५. १६ [ ३ ] **भौवादिकः** – – —अत्र भाष्यांशो निःसंशयं लुप्तः। किंतु लिखितपुस्तकेषु लोपदर्शकं किमपि चिह्नं नास्ति ॥ २४ [४] **मीङ् हिंसायाम्**—§-मॅ-मु। 'मीञ् हिंसायाम्' इति भाव्यम् ॥ ७१६. २४ [ ७ ] **तदानीं**—ग१.२-*मॅ-मु। इदानीं–त१.२.३.६.७.८-भ; तदनु–त४.५ ॥ ७१७. १५ [९] **अनुदात्तेत्**—ग१.२-त४.५.८-भ। उदात्तेत्–त१.२.३.६.७-मॅ-मु ॥ २१ **क्रीडन्ति**—त४.५। क्रीडंते–त१. ६.८-मॅ-मु ॥

[ १०. ११२ ] ७२०. ३१ [ ९ ] **त्वां**--त४.५.८। त्वा त्वां--त१.२.३.६.७-भ-मॅ-मु ॥ 'त्वाम्' इत्येव मन्त्रे ॥

[ १०. ११३ ] ७२१. २६ [ १ ] **विश्वेभिः**—§-मु। विश्वेभिः सर्वेभिः (?)--मॅ ॥ ७२३. २८ [ ७ ] **या यानि**—ग२-त१.२.३.६.७.८-भ-मु। यानि--मॅ ॥ ७२५. १ [ १० ] **मन्यतेर्लोटि**—त१.२.३.६.७.८-भ-मु। मन्यतेर्लेटि--ग१.२-त४.५-मॅ ॥

[ १०. ११४ ] ७२५. ६ **सूक्तं वैश्वदेवम्**—ग१.२-त४.५। सूक्तं--त१.२.३.६.७.८-भ-मॅ-मु ॥ ७२८. १ [ ६ ] **स्तुतशास्त्रादिरूपेण**—ग१.२-त१.४.५.७-भ५। स्तुत्शास्त्रादि°--त २.३.६.८-भ२.४.८। सन्शास्त्रादि°--भ७। संतः शास्त्रादि°--मॅ-मु ॥ ७२८. २२ [ ८ ] **उक्था उक्थानि**—ग१.२-भ५.८-मु। उक्थानि--त१.३.६.७.८-भ२-मॅ ॥ २७ **प्रतिक्षणं**—त-भ४.७. ८। प्रतिक्षीणं--ग१.२। प्रतिलक्षणं--भ१.२-मॅ-मु ॥ ७२९. १९ [१०] **सप्ताश्वाः**—ग१.२-त-भ २.५.८-मु। साश्वाः--भ१.४; संख्याः--भ७। अश्वाः--मॅ ॥

[ १०. ११५. ] ७३०. ५. [ १ ] **स्तनपानायापि**—ग१.२ । सूनयानावापि--त१.२.६.८; स्नुवपानीयापि--त४.५; सूनांयानायापि--त३; सूनपानायापि--त७-भ१.४; नपानायापि--भ७; सूनपामीयापि–भ८ । पानायापि–मॅ-मु ॥ ७. **समासान्तस्यानङः** ... ... °**नङभावः**—*मॅ-मु । लिखितपुस्तकेष्वशुद्धाः पाठाः । ९. **तर्हि स्तनपानाय न गच्छतीति**—*मॅ-मु । तर्हि स्तनपानाय न गच्छंतीति–ग१.२-भ२; नहि स्तनयानाय न गच्छतीति–त१.२.३.८-भ१.४; तर्हि स्तनपानायेति–त४.५; नहि स्तनयानाय नायन गच्छतीति–त६; नहि स्तनपानयनेन गच्छतीति–त७; तर्हि तनपानाय न गच्छतीति–भ७ ॥ १०. **न याति**–*मॅ । नायाति–ग१.२-त१.२.३.६.७.८-भ; नु याति–त४.५; न पाति--मु ॥ २७. [ २ ] **इनः समर्थः**—ग-त१.२.३.६.७.८-भ । इनो न समर्थः–त४.५-मॅ-मु ॥ ७३१. २४. [ ४ ] **प्र शिषन्तः प्रकर्षेण सिषन्तः सिषासन्तः**—*मॅ । प्रकर्षेण सिषासंतः–ग१.२; प्रकर्षेण सिषंतः सिषासंतः–त१.२.३.६.७.८-भ२.८; प्रकर्षेणा-सिषंतः–त४; प्रकर्षेणासिषंतः संत–त५; प्रकर्षेण सिषंतः–भ१.४.७ । प्रशिषन्त प्रकर्षेण शिषन्तः शिषासन्तः–मु ॥ ७३२. १. [ ५ ] **शब्दार्थादशिप्रुषी°**—*मॅ-मु । शब्दार्थादशुषिप्रषी°–ग१.२; शब्दार्थादन् ( °वन्–त७ ) पृश्वी°–त१.२.३.७; शब्दार्थाः दशपृश्वी°–भ ॥ **क्नप्रत्ययः**—*मॅ । त्रन्°–त४.५; वन्°–मु इतरेषु च ॥ ४. **विप्रकृष्टस्य**—ग१.२.-त४.५-भ७-मु । च प्रकृष्टस्य–त१.२.३.६.७.८-भ । च प्रकृष्टस्य च–मॅ ॥ ५. **वर्तमानस्य च**—ग२-त१.२.३.६.७.८-भ-मु । वर्तमानस्य–त४.५-मॅ ॥ २८. [ ७ ] **वसु धनम्** । ‘ वसु ष्टवे ’ इति संहिता । ‘ वसुः स्तवे ’ इति पदपाठः ॥ ७३३. १. **सुधितार्थास्तृप्त्यर्थाः** । इदं काशिकायां (पा. सू. ७.४. ४५) नोपलभ्यते ॥ १०. [८] ‘अन्नं वा आज्यम्’ इति श्रुतिः कुत उद्धृतेति न ज्ञायते ॥ १५. [८] **लेट्याडागमः**—ग१.२-त१.३.७.८-भ१.२.७.८ । लट्यागमः–भ४ । लेट्यडागमः–त२. ४.५-मॅ-मु ॥

[ १०. ११६ ] ७३४. १८ [ २ ] **अस्य सोमस्य**—ग१.२-त१.२.३.७.८-भ१.२.४.५.८-मु । सोमस्य--मॅ ॥ ७३५. २१ [ ४ ] **नुडभावः**—ग१.२-त१.२.३.६.७.८-भ१.२.४.५.८-मु । नुडागमः--त४.५; दुडभावः–भ७ । नुडागमाभावः--मॅ ॥ ७३६. २१ [ ७ ] **ड्यि च इत्याद्युदात्तत्वम्**—ग१-*मॅ-मु । दुयिवेद्यत्वाद्यु°--त१.२.३.६.७.८-भ८; सुवेत्याद्यु°--त४.५; दुःयिवेद्यत्वाद्यु°--भ१.२.४.७ ॥

[ १०. ११७ ] ७३७. २० °**प्रशंसाद्ये**—*मॅ-मु । °प्रशशंसाख्ये--ग१.२; °प्रशंसावाद्ये--त१.२.३.६.७.८; °प्रशंसाद्रे--त४.५; °प्रशंसाचाद्ये--त७-भ१.२.७ ॥ ७३८. १० [ २ ] **चक-मानाय कामयमानाय**—ग१.२-त४ । चकमानाय--त३.५.६.७.८-भ२.८-मॅ-मु ॥ ११ **अति-थये**—ग१.२ । अतिशयेन--त-भ-मॅ-मु । ७३९. ६ [ ४ ] **व्यतिरेकेण निन्दामाह**—*मॅ-मु । व्यतिरेकेन°--त४.५ । व्यतिरेकान्वयाभ्यामाह--ग१.२-त१.२.३.६.७.८-भ ॥ २० [५] **एव खलु**—ग१.२-त१.२.३.६.७-भ । एते खलु--त८ । खलु--त४.५-मॅ-मु ॥ २२ **चक्रा चक्राणि**—ग२-त४.५ । चक्राणि--त३.६.७.८-भ२.८-मॅ-मु ॥ २९ ‘ अप्रचेताः ’ इति पदस्य उभयथा व्याख्या-तत्वात् ‘ यस्य न भवति स वा ’ इत्यावश्यकमिति प्रतिभाति ॥ ७४०. ८ [ ६ ] **नैहिकं नामुष्मि-कमिति**—ग१.२-त-भ२.४.८-मु । नैहिकं न्वामु°--भ१; नैहिन्वामु°--भ७ । ऐहिकमामुष्मिकमिति--मॅ ॥ १७ [ ७ ] **शास्त्रार्थमब्रुवाणाज्जनात्**—त१.२.३.६.७.८-मु । शास्त्रार्थमब्रुवानाज्जनात्--मॅ । अक्षस्य जनस्य--भ; अज्ञस्य जनस्य--ग१.२-त४.५ ॥

[ १०. ११८ ] ७४१. २० [ १ ] °तेजस्क वा—ग१.२-त१.२.३.६.७.८-भ-मु। °तेजस्क--त४.५-मॅ ॥

[ १०. ११९ ] ७४५. १२ [ ११ ] अकार्क्षम्—*मॅ-मु। अकार्पे--ग१.२-त१.२.३.४.५.६.८-भ१.२.७.८; अकापी--त७; आकार्ष--भ४। 'अकर्षम्' इति पाठः पीटर्सन्महाशयैः स्वीकृतः ॥ १७ [ १२ ] नाभौ—*मॅ। लभौ--त१.२.३.६.७.८; नभो--त४; नतो--त५; लाभौ--भ७। नभौ--मु॥ 'अभिनभ्यम्' इति पदं विभज्य व्याख्यातम्॥ १९ अव्ययीभावः—ग१.२-त७-भ१.२.४-मु। अव्ययीभाव°--त३.४.५.६.८-भ७.८-मॅ॥

[ १०. १२० ] ७४७. ३० [ ३ ] स्त्रीपुंसरूपेण—त-भ। स्त्रीपुंरूपेण--मॅ-मु। ऋ. सं. ७.१०४.२३; पा. सू. ५.४.७७ द्रष्टव्यम्॥ ७४८. २७ [ ५ ] वलानि—त-भ। वहुलानि (?)--मॅ-मु। षष्ठमन्त्रभाष्यं द्रष्टव्यम्॥ ७४९. १३ [ ६ ] ढत्वकत्व°—ग१.२-त१.२.३.४.५.७-भ८-मु। ठत्व°--त६; डत्वकत्व°--भ१.२.४। टत्वकत्व°--त८-भ७-मॅ॥

[ १०. १२१ ] ७५१. ८ [ १ ] परमात्मनः—त१.२.३.६.७.८-भ-मु। परमात्मनः सकाशात्--ग१.२-त४.५-मॅ॥ ९ वियदादीनां—भ४.७। वियदादीनां सूक्ष्मभूतानां–त-मॅ-मु॥ —°स्तदुपहितो—त-भ-मु। °स्तदुपाहितो–मॅ॥ ७५२. १७ [ ३ ] इत्येकदेश°—§-मु। इत्येकादेश°–मॅ ( मुद्रणदोषः ? ) ॥ १९ पूर्वपदस्य—ग१.२। पूर्वपदं–भ२.८-मॅ। पूर्वपदं...... आद्युदात्तं–मु॥ ३१ [४] प्राच्यारम्भा आग्नेय्याद्याः कोणदिश ईशितव्याः। प्रारंभा आग्नेयाद्याः कोणादिशः ईशितव्याः–ग१.२-भ२.४.७; प्रारंभा आग्नेयाद्याः कोणदिशः ईशितव्याः–त१.२.३.६.७.८-भ८-पीटर्सन्। ईशितव्याः–त४.५। प्राच्यारंभा आग्नेय्याद्या कोणदिशः ईशान्यन्ताः–मु। प्राच्यारंभा आग्नेय्याद्याः कोणदिश ईशानांता वा–मॅ। मॅक्समुल्लरटिप्पणी[1] पीटर्सन्टिप्पणी[2] च द्रष्टव्या। उभाभ्यामपि स्वीकृतपाठौ समर्थितौ। लिखितपुस्तकेषूपलभ्यमानः पाठ एव समीचीनः, अभ्यूहो मास्त्विति पीटर्सनमहाशयानां मतम्। अस्मन्मते 'प्राच्यारम्भा' इत्यभ्यूह आवश्यकः किंतु न 'ईशानान्तो वा' इति। 'आग्नेय्याद्याः कोणदिशः' इति पदयोर्भावात् 'प्राच्यारम्भा' इत्यावश्यकं प्रतिभाति। प्रथमतः भाष्यकारः 'प्रदिशः' इति पदं 'प्राच्यारम्भा दिशः' इति व्याख्यातुमैच्छत्, परं अनन्तरं 'बाहू' इति पदं प्रधानदिक्त्वेन व्याख्येयमिति प्राप्ते पुनः 'आग्नेय्याद्याः कोणदिशः' इति प्रदिक्पदं व्याख्यातवान्। मॅक्समुल्लरमहाशयानामयं विचारोऽस्माकं संमतः। 'भुजवत्प्राधान्ययुक्ता दिशश्च' इति यदि स्यात्, समीचीनमभविष्यत्। 'ईशानान्ताः' इत्यभ्यूहस्तावत् सर्वथानावश्यकः प्रतिभाति। यस्य प्रदिश ईशितव्या इति समीचीनार्थवहम्। वस्तुतः यस्येमाः प्रदिशः आग्नेय्याद्याः कोणदिशः ईशितव्याः......भुजवत्प्राधान्ययुक्ता दिशश्च यस्य स्वभूताः' इति पाठः समीचीनः स्यात्। किंतु 'प्रारंभा' इति लिखितपुस्तकेषु वर्तते अतः 'प्राच्यारंभा' इत्यभ्यूह्य पाठनिर्धारणमावश्यकम्। 'इमाश्च प्रदिशः प्रधानभूताश्चतस्रो दिशः यस्य देवस्य बाहू बाहुभूताः तस्मै' इत्यथर्ववेद ( ४.२.५ ) भाष्यम्॥ ७५३. ५ [ ५ ] उद्गूर्णविशेषागहनरूपा वा—भ७-मु। उद्गूर्णविशेषागहनरूपा कृता–ग१.२; उद्गूर्णविशेषागहनरूपा तता–त१.२.३.६.७.८-भ४.५.८;

1. Preface to the Sixth Volume of the First Edition, Vol. IV, p. cxxxviii. f. (2nd Edn.).
2. Hymns from the Ṛgveda ( Bombay, 1888 ).

उद्गूर्णाविशेषागहनरूपा–त४.५; उद्गूर्णविशेषागहनसंपा तता–भ२। उद्गूर्ण विशेषागहनरूपं वा–*मॅ। २०. [ ६ ] अत एव अभ्यस्ता°—ग१.२-त४.५। अभ्यस्ता°–त१.२.३.६.७.८-भ-मॅ-मु॥ ७५४. १४. [ ८ ] यश्चित् यश्च—ग१.२-त४.५-भ२। यश्च–त१.२.३.६.७.८-भ१. ४.७.८-मॅ-मु॥

[ १०. १२२. ] ७५५. २८. [ १ ] लेट्यडागमः—ग१.२-त४.५-भ७-मु। लेट्याडागमः–त१.२.३.६.७.८-भ१.२.४.५.८। लेट् लेट्यडागमः–मॅ॥ २९. विश्वशब्दोपपदात्—§-मु। विश्वशब्दोपधात्–मॅ॥ ७५७. १३. [ ४ ] यजमानं पृणन्तं—ग२। यजमानं तं–त१.२. ३.७.८-भ। यजमानं–मॅ-मु॥ २२. [ ५ ] नोऽस्माभिः। 'नः' इति मन्त्रे नास्ति॥ ७५८. २. [ ६ ] सुशकां—ग१.२-त१.२.३.६.७.८-भ२.४.५.८-मु। सुशक्तां–त४.५; सुशक्र–भ१; सुशकं–भ७। सुशक्यां–मॅ॥

[ १०. १२३. ] ७५९. २४. [ २ ] नभस्याकाशे - - - —भ७-मॅ। नभस्यकाथ जात तस्यास्य हर्यतस्य पृष्ठं दर्शि दृश्यते। ऋतस्य उदकस्य सानौ उच्छ्रिते देशे विष्टपि विष्टब्धे भ्राट् दीप्यमानं तमिमं समानं योनिं सर्वसाधारमुदकस्थानं–ग१.२। आकाशस्य पंक्तिरेका त्यक्तास्ति–त१.२.३.६.७. ८-भ१.२.४.५.८। नभस्याकाशस्य–त४.५-मु॥ ७६०. २३. [५] उपगम्य—उपगत्य–§-मॅ-मु। अस्मिन्नेव मन्त्रभाष्ये 'उपगम्य' इत्यनन्तरमागतम्॥ २५. जरयितारं—ग२। रजयितारं–त१.२. ३.६.७.८; रजतारं--भ; जारयितारं–त४.५-मॅ-मु॥ ७६१. १५. [ ७ ] गवि गन् धृत्वो वः—ग२-मॅ-मु। इतरलिखितपुस्तकेष्वशुद्धाः पाठाः॥ १६. गन्भावश्च—त४-*मॅ। गन्नावश्च–त५। गंभावश्च–ग१.२-त१.२.३.६.७.८-भ-मु॥

[ १०. १२४. ] ७६२. ८. आद्याग्नेयी—§। आग्नेय्याद्या–अनु.॥ ७६३. २१. [ ४ ] बहून् संवत्सरान्—§-मु। संवत्सरान्–मॅ॥

[ १०. १२५. ] ७६६. २३. [ २ ] दधामि धारयामि—त१। दधामि प्रयच्छामि–ग१.२-त४.५-भ२; दधामि–त२.६; दधामि धारयामि प्रयच्छामि–त७। धारयामि–त३.८-भ१. ४.७.८-मॅ-मु॥ ७६७. [ ४ ] श्वासोच्छ्वास°—भ७। श्वासोच्छ्वासादि°–त-भ२.८-मॅ-मु॥ ११. श्नुप्रत्ययः। धातोः—त२-भ४.७। श्नप्रत्ययः धातोः–त१.३.६.७.८-भ२.५.८; श्नप्रत्ययः–त४.५; श्नप्रत्ययः धातोः–भ७। श्नुधातोः–मॅ-मु॥ २४. [ ५ ] यं कामये—ग१.२। कामये–त-भ-मॅ-मु॥ ७६९. २. [ ८ ] सर्वस्मात्—ग१.२-त१.२.३.६.७.८-भ-मु। सर्वात् (?)–त४.५-मॅ॥

[ १०. १२८. ] ७७५. १०. [ ४ ] विवादपदेषु—ग१.२-भ२। विवादपरेषु–त१.२. ३.६.७.८-भ१.४.७.८; विवादेपरेषु-भ५। विवादेषु–त४.५-मॅ-मु॥ ११. अड्—त१.२.३.६. ७.८-भ१.२.४.८। आङ्-भ७। अट्–त४.५-मॅ। आट्–मु॥ षण्मोर्वीरंहसः...... । श. ब्रा. १.५.१.२२; ऋ. सं. ६.४७.३; १०.१४.१६ द्रष्टव्यम्॥ २२. [ ५ ] यथा—भ२.७। तथा–ग१.२-त-मॅ-मु॥ २३. प्रयतध्वम्—ग२-त-भ२.८। प्रयध्वं–भ१; प्रयत्वध्वं–भ४। प्रयच्छध्वं–भ७-मॅ-मु॥

[ १०. १२९ ] ७७७. १५. सृष्टिस्थितिप्रलयादीनामत्र—*मॅ-मु। सृष्टिस्थित्यादिप्रलया°-§॥ ७७८. ८. [ १ ] चाक्षेपमुखेन—ग१.२-भ२-*मॅ-मु। चापेक्षामुखेन–त१.२.७-

भ७; चापेक्षासुखेन–त३.८; चाक्षेपसुखेन–त४.५; चाक्षामुखेन–त६; चाणाक्षामुखेन–भ८; चापेक्ष्यसुखेन भ४ ॥ ११. **आत्रियमाण°**—ग१.२-त-भ२.४.८ । आवार्याभावादात्रियमाण°–भ७-मॅ-मु ॥ १४. **भोगे**—ग१.२-त१-भ२.८ । भा-त२.६.८; मा-त३; भोग–त४-भ४; भोगि–त५; न-त७ । वा-भ७-मॅ-मु ॥ २१. **दुरवस्थानं**—ग१.२-त१.२.३.६.७.८-भ२-मु । दुःखस्थानं–भ४.७.८-मॅ ॥ ७७९. ४. [ २ ] **ओदनः**—त५-भ४.७.८ । ओदना–त२.६.८; उदना–त३.७; ओदन–त१; उदनः–भ२ । ओदनं–त४-मॅ-मु ॥ ६. **रात्र्या**—त१.२.३.६.७.८-भ२.५.८ । आह न रात्र्या अहश्च–त४.५-भ४.७ । न रात्र्या-मॅ ॥ **नासीत्**—§-मु । आसीत्-मॅ ॥ १२. **शुद्धः**—*मॅ-मु । शुभ्र–त१.२.३.४.५.६.७-भ; शुभ्र–त८ । ‘अप्राणो ह्यमनाः शुद्ध’ इति कुत उद्धृतम् ? ॥ ७८०. १५. [ ३ ] **तद्रूपता तदात्मनाम्**—*मॅ-मु । तद्रूपतां तदात्मतां-त१; तद्रूपतां तदात्मतां–त२.४.५.६.७-भ२.७.८; तद्रूपतां तदात्मनां–त३.८ ॥ ७८१. १५. [ ४ ] **इति श्रुतिः । आत्मना इत्थमवगमितेऽर्थे**—भ४-मु । इति श्रुतिरात्मना इत्थमवगमितेथो--त१-भ२.८; इति श्रुतिरात्मना इत्थमवगमितथा–( °गतितथा-त७ )–त२.३.६.७.८; इति श्रुत्यात्मना इत्थमवगमितेथा–त४.५; इति श्रुतिरात्मनेत्थमवगमतेर्थे–भ७ । इति श्रुत्यात्मनेत्थमवगमितेर्थे–मॅ । ‘श्रुतिः’ इति पदमनावश्यकम् । मॅ-पाठे ‘तथा चाम्नायते’ ‘इत्थम्’ इत्यनावश्यकम् ॥ ७८२. २४. [ ६ ] **निगमयति**—§-मु । निर्गमयति ( ? )-मॅ ॥ ७८३. ५. [ ७ ] **द्रढयति**—भ४-मु । दढयति–त-भ२.८-मॅ ॥ ६. **न कदाचिद्°**—ग१.२-त४-भ२.४.७ । कदाचिद°–त१.२.३.५.६.७.८-भ८-मॅ-मु ॥ १४. **°बोधा न तर्हि**—§ । °बोधना तर्हि ( ? )-मॅ-मु ॥ १५. **ईश्वरमेव**—ग२ । ईश्वरः वेद–त३.६.७.८-भ२.८; ईश्वरवेद-त४.५ । ईश्वरो वेदं–त१-मॅ-मु ॥ २०. **गते व्याप्ते**–ग१.२-त१.२.६.८-भ४.५ । व्याप्ते–त४.५ । गंतव्ये–मॅ-मु ॥

[ १०. १३० ] ७८४. ७ [ १ ] **य उक्तः सर्गात्मको यज्ञस्तं यज्ञम् इमे पितरः**—ग१.२ । यदुक्तः सर्गालोको ( स्वर्गो लोको–त१; सर्गालोव्हो–त७; सर्गालको–भ५) यज्ञस्तं यज्ञमिमे पितरः–त१.२.६.७-भ५ । – – । पितरः–मॅ । पितरः–मु ॥ ८ **सर्जनेन**—ग१.२ । सर्वजनेन–त-भ । स्ववयनेन–*मॅ-मु । ‘स्वसर्जनेन’ इति स्यादिति मॅक्समुल्लरमहाशयाः ॥ १५ **विश्वतः सर्वतः**—§-मु । सर्वतो विश्वतः (?)–मॅ ॥ १७ **एवमायामविस्तारवान्** । एवमायावि°–ग१.२-भ२; एकमायावि°–त२.३.६.७.८-भ१.४.५.८ । एवमायतो विस्तारवान्–मॅ-मु । ६ पङ्क्तिर्द्रष्टव्या ॥ ७८६. २२ [ ५ ] **सर्वयागोपकरणाः**—ग१.२-भ-मु । यागोपकारणाः–त । यागोपकाराः–मॅ ॥ ७८८. ३१ [३] **वाजयन्तः अन्नकामा बलकामाश्च** । एकस्य पदस्य व्याख्यानद्वयम् ॥ ७९०. १ [ ७ ] **सुष्ठु त्राता**—§-मु । सुत्राता–मॅ ॥

[ १०. १३२ ] ७९०. ९-१० **मैत्रावरुणं......°देवतान्त्या** । ‘मैत्रावरुणमाद्या लिङ्गोक्तदेवता न्यङ्कुसारिण्यन्त्या’ इत्यनुक्रमणीपाठः ॥ २८ [ २ ] **हे मित्रावरुणा मित्रावरुणौ**—ग१.२-भ । हे मित्रावरुणौ–त-मॅ-मु ॥ ७९१. १३ [ ३ ] **इत्याकारलोपः**–त-भ-मु । इत्यकार°–मॅ ॥ ७९२. ८ [ ५ ] **मित्रो वरुणो वा**—भ२.८-*मॅ-मु । मित्रावरुणौ वा–ग१.२-त४; मित्रावरुणो वा–त१.२.३.५.६.७.८-भ४; मित्रावरुणो–भ१.७ ॥

[ १०. १३३ ] ७९४. ११ [ २ ] **हे इन्द्र त्वं**—ग१.२-त४.५ । हे इंद्र–त३.६.७.८-

संहितायां यत्र तत्खिलं निवेशनीयं पठनीयं वा तस्य तज्ज्ञापकम्। यद्यनेकानि खिलान्येकत्र वर्तन्ते तर्हि अन्त्यखिलान्ते ऋङ्मन्त्रप्रतीकमुद्धृतम्।

एतत्पुस्तकलेखकेन न केवलं स्वकल्पनयैतल्लिपिबद्धं कृतं किंतु किंचित् शारदालिपिलिखितं पुस्तकं दृष्ट्वा लिखितमिति तद्गताशुद्धिभ्यो ज्ञायते। अस्मिन् पुस्तके संहिता खिलानि च स्वरचिह्न-युतानि। किंत्वस्य स्वरलेखनपद्धतिः सर्वथा भिन्ना वर्तते। प्रायेण लिखितपुस्तकेषु स्वरितमुपरि-चिह्नाङ्कितं वर्ततेऽनुदात्तं चाधस्ताच्चिह्नाङ्कितम्। अस्मिन् पुस्तके तावदुदात्तः जात्यस्वरितश्चेति द्वावेव दर्शितौ अनुदात्त इतरस्वरितश्च वर्जितौ। उदात्तः उपरिस्थितरेखया प्रदर्शितः जात्यस्वरितश्च ᶜ अनेन चिह्नेन। खिलेष्वेतच्चिह्नं द्विवारमागतम् (१.११.४;१२.७)। परं पदमाद्युदात्तं स्वरितादि वा चेत् जात्यस्वरस्त्रिकम्पेनैव दर्शितः। स्वरितस्य ह्रस्वत्वेऽपि त्रिकम्प एव लिखितः। तस्याधस्ताद-नुदात्तचिह्नमुपरि वा स्वरितचिह्नं कृतम्। इयं स्वरपद्धतिः मैत्रायणीकाठकसंहितयोः स्वरपद्धत्या साम्यमावहति तस्या आधारभूता चेति शेफ्टेलोविल्ज्महाशयानां मतम्। तैः स्वकीयपुस्तक इयमेव स्वरलेखनपद्धतिरवलम्बिता। मयाप्यत्र सैव स्वीकृता। काश्मीरखिलेभ्योऽधिकानि यानि खिलानि तैः स्वकीयपुस्तके मुद्रापितानि तेषां मध्ये केषुचित् सूक्तेष्वेतद्रीत्यैवोदात्तस्वरो दर्शितः। मया तावदधिकानि खिलानि स्वररहितमेव मुद्रापितानि यतस्तेषां स्वरविषये मुद्रितपुस्तकानां लिखित-पुस्तकानां चैकमत्यं नास्ति। मॅक्समुलरमहोदयैरपि स्वकीयपुस्तके खिलानि प्रायः स्वररहितान्येव मुद्रापितानि।

खिलपाठनिर्धारणविषये ये ये ग्रन्था मया समवलोकितास्तेषां मध्ये औंधनगरस्थ–पण्डित-सातवळेकरमहोदयैः प्रदत्तं ऋग्वेदस्य शाङ्खायनशाखाया नागरीलिप्यां लिखितं पुस्तकद्वयं प्रथमं निर्देशमर्हति। तयोरेकं पुस्तकं गुर्जरदेशे जीर्णदुर्गे (= जुनागडनगरे) संवत् १७५४ वर्षे लिखित-मपरं च नवानगरे संवत् १८९४ वर्षे लिखितमस्ति। उभयोश्चतुःषष्टावध्यायेषु संहिता विभक्ता। अष्टकानि न परिगणितानि। मण्डलानामादिरन्तश्च दर्शितः। स्वरा रक्तवर्णेनाङ्किताः। नवानगरपुस्तके अनुदात्तस्वरितौ प्रचलितरीत्यैव दर्शितौ। जुनागडपुस्तके अनुदात्तो यथापूर्वं दर्शितः स्वरितस्तु अनु-दात्तवदेव किंतु अक्षरं मध्ये भित्वा दर्शितः। पीटर्सन्महाशयैः अलवरनगरस्थानि ऋग्वेदस्य शाङ्खायनसंहितायाः पदपाठस्य च पुस्तकानि दृष्ट्वा सूचीपत्रे तान्युपवर्णितानि। तत्रस्थ एकस्मिन् संहितापुस्तके स्वरितचिह्नमेतद्रीत्या दत्तमिति तैर्लिखितम्। जुनागड-नवानगरपुस्तकयोः पाठ-साम्यात् केवलं तयोः प्राचीनतरं जुनागडपुस्तकमेवास्मिन् ग्रन्थे मयोपयुक्तं 'जुना' इति संज्ञया तत्र तत्र निर्दिष्टं च। अस्य पुस्तकस्य शाङ्खायनशाखीयत्वे लिखितं प्रमाणं नास्ति। अलवरनगर-स्थानि लिखितपुस्तकान्यपि शाङ्खायनशाखानुसारीणि इति पीटर्सन्महाशयानां मतम्। तेष्वपि शाङ्खायनशाखीयत्वे लिखितं प्रमाणं नास्ति। किंतु गुर्जरदेशीया ब्राह्मणाः शाङ्खायनिन इति लोक-प्रसिद्धिमादृत्यैतेषां पुस्तकानां शाङ्खायनशाखीयत्वमनुमन्तुमुचितम्। एतत्पुस्तकस्थानि खिलानि शाङ्खायनशाखायां संहितान्तर्गतानि खिलत्वेनैव वा तेषां तत्रान्तर्भाव इति वक्तुं दुष्करम्। पुस्तकेषु तावत् खिलानि प्रत्यध्यायं वर्गेष्वन्तर्भूतानि सन्तीति स्पष्टम्। चरणव्यूहभाष्ये शाङ्खायनशाखाया वैशिष्ट्यं दर्शितं तद्यथा—'यमृत्विजो' इति दशमं वालखिल्यसूक्तं (ऋ. सं. ८. ५८) अपठित्वा तत्रस्थौ 'एक एवाग्निः' 'यमृत्विजो' इति द्वौ मन्त्रौ ऋ. सं. १०. ८८.१८ अनन्तरं ('कत्यग्नयः कति सूर्यासः' इति मन्त्रस्यानन्तरं) खिलत्वेन पठनीयाविति। एतदनुसारेण जुनागडपुस्तके दशमं वालखिल्यसूक्तं वर्जयित्वा तत्स्थौ द्वौ मन्त्रौ 'कत्यग्नयः' इत्यस्यानन्तरं लिखितौ। अलवरपुस्तक इदं शाङ्खायनशाखावैशिष्ट्यं वर्तते न वा इति न ज्ञायते। पीटर्सन्महाशयानां कृतायां सूच्यां तन्न दर्शितम्। आउफ्रेख्ट्महाशयमुद्रितऋग्वेदपुस्तकस्य तुलनया पीटर्सन्महाशयैः अलवरपुस्तके खिलानि दृष्टानि वर्णितानि च। आउफ्रेख्ट्पुस्तकेऽविद्यमानानि खिलानि अलवरपुस्तके वर्तन्ते न

वा, वर्तन्ते चेत् कीदृशस्तेषां पाठ इत्यस्मिन् विषये जिज्ञासावशिष्यत एव । अलवरपुस्तकानि स्वयं द्रष्टुं मे मनीषासीत् किंतु लिखितपुस्तकानि पुस्तकालयाद्बहिर्न नेयानीति पुस्तकालयाधिकारिणां नियमवशात् न द्रष्टुं पारितवान् । तत्रस्थपुस्तकानां पीटर्सन्‌महाशयकृतं वर्णनमनुसृत्यैव कार्यं निर्वर्तनीयम् ।

अलवर-जुनागडपुस्तकयोस्तुलनया अधोलिखिता विशेषाः खिलविषये दृष्टिगोचरा भवन्ति—

( १ ) 'यस्तृणैरध्ययनम्' इति खिलं अलवरपुस्तके ऋ. सं. ५. ४९ अनन्तरं वर्तते । जुनागडपुस्तके तु ऋ. सं. ६. ४८ अनन्तरम् ।

( २ ) श्रीसूक्तं ( २. ६ ) अलवरपुस्तके नास्ति । जुनागडपुस्तके विद्यते ।

( ३ ) शिवसंकल्पसूक्तं ( ४. ११ ) अलवरपुस्तके नास्ति । जुनागडपुस्तके विद्यते ।

( ४ ) ३. १९, ३. २०, ४. १२ इति त्रीणि खिलानि जुनागडपुस्तके विद्यन्ते । अलवरपुस्तके तेषामभावो दृश्यते ।

( ५ ) २. १२ खिलं जुनागडपुस्तके तृचं अलवरपुस्तके द्वृचम् । २. १३ खिले तृतीयमन्त्रानन्तरं जुनागडपुस्तके त्रयो मन्त्रा अधिकाः । ४. २ खिले ( रात्रिसूक्ते ) जुनागडपुस्तके अलवरपुस्तकापेक्षया मन्त्रद्वयमधिकम् ।

एतान् विशेषान् वर्जयित्वा अलवर-जुनागडपुस्तकयोरन्यत्सर्वं समानम् । एतस्माद्भेदादनुमीयते यदेतानि खिलानि यद्यपि प्रायः वर्गगणनायामन्तर्भावितानि तथापि ऋग्वेदस्य शाङ्खायनसंहितायां न परिगणितान्यासन्निति । केषां केषां खिलानां शाङ्खायनशाखायां खिलत्वेनान्तर्भाव आसीदित्ययं तावदपरो विषयः । 'विदा मघवन् विदा' इत्युभयोः पुस्तकयोरन्त्यं खिलम् । तदनन्तरं 'अग्निर्देवेद्धः विदा मघवन्विदां' इत्यंशोऽप्युभयोः समान एव । उभयोः पुस्तकयोः खिलपाठोऽपि प्रायः समानः । जुनागडपुस्तके ये पाठभेदा उपलभ्यन्ते ते सर्वे मया तत्र तत्र प्रदर्शिताः । उपरिनिर्दिष्टेषु खिलेषु जुनागडपुस्तकस्य यद्वैशिष्ट्यं तदपि तत्र तत्र टिप्पणीषु दर्शितमेव ।

शार्मण्यदेशे म्युनिक्‌नगरस्थपुस्तकालये खिलानां लिखितपुस्तकद्वयं ( ३०, १५५ क्रमाङ्कयुतं ) वर्तते । तयोः केवलं निविद्पुरोरुक्प्रैषकुन्तापात्मको खिलभागोऽस्ति । तत्स्थाः पाठभेदाः शेफ्टेलोविट्झ्महाशयैः स्वकीयटिप्पण्यां दत्ताः । तेषु बहूनां पाठभेदानामितरपुस्तकपाठैः साम्यान्न ते मयोद्धृताः । ये विशिष्टाः पाठभेदाः क्वचिद्वर्तन्ते ते मूलपुस्तकमनिर्दिश्य प्रदर्शिताः ।

अस्मिन् खिलसंग्रहे त्रयोदशमन्त्रात्मिका शिवसंकल्पोपनिषद् ( खिल ४. ११ ) विद्यते । लण्डननगरे ब्रिटिश म्युझीअम्-संज्ञकसंग्रहालये वर्तमाने ऋग्वेदसंहितापुस्तके ( क्रमाङ्कः Add. 5351 ) सैवाष्टाविंशतिमन्त्रात्मिकास्ति । शेफ्टेलोविट्झ्महाशयैः एकस्मिन्निबन्धे प्रकाशितस्तस्य पाठो मया तस्य खिलस्य टिप्पण्यां समुद्धृतः । जुनागडपुस्तके तत्समान एव पाठः । पं. सातवळेकरमहोदयैर्मुद्रितायां ऋग्वेदसंहितायां २६ मन्त्रात्मिका शिवसंकल्पोपनिषद् क्वचिद्विभिन्नपाठेन विभिन्नक्रमेण च मुद्रिता ।

सुविज्ञातं श्रीसूक्तमस्मिन् खिलग्रन्थे २. ६ खिलत्वेनागतम् । प्राचीनकालादारभ्यैतत् भारतवर्षे वैदिकधर्मानुयायिभिः पठ्यते । श्रुतिस्मृत्यादिग्रन्थेषु तद्गताः केचन मन्त्रा उद्धृताः सन्ति । अस्य श्रीसूक्तस्यासंख्यातानि लिखितपुस्तकानि भारतवर्षे उपलभ्यन्ते । श्रीसूक्तस्य मन्त्रसंख्याविषये मन्त्रक्रमविषये पाठविषये च बह्व्यः परंपरा दृश्यन्ते । शेफ्टेलोविट्झ्महाशयैः इंग्लंडदेशे विद्यमानानि श्रीसूक्तस्य लिखितपुस्तकानि समवलोक्य तद्गताः पाठभेदा अन्यत्र निबन्धरूपेण संगृहीताः । तेषु विशेषवैचित्र्यस्याभावान्न मया तेऽत्रोद्धृताः । श्रीसूक्तपाठविनिश्चयार्थं मयापि विभिन्नग्रन्थालयस्थानि श्रीसूक्तस्य ४४ लिखितपुस्तकान्यवलोकितानि । परं तेषां पाठभेदानां पूर्वसंकलितपाठैः प्रायः समानत्वात् तत्तल्लिखितपुस्तकपाठोद्धरणमनावश्यकमित्याकलयामि । ये केचन विशिष्टाः पाठ-

भेदास्तेषूपलब्धास्ते मूलपुस्तकमनिर्दिश्य संगृहीताः। श्रीसूक्तस्यादिमेषु पञ्चदशसु मन्त्रेषु विद्यारण्य-स्वामिनो भाष्यं विद्यते। मॅक्समुल्लरमहोदयैः स्वकीय ऋग्वेदभाष्यपुस्तक एतन्मुद्रापितम्। मयापि श्रीसूक्तभाष्यस्य बहूनि लिखितपुस्तकानि नानाग्रन्थालयस्थानि दृष्ट्वा भाष्यं परिशोधितं श्रीसूक्त-स्याधस्तान्मुद्रापितं च। तत्पाठभेदोद्धरणमनावश्यकं मन्ये।

रात्रिसूक्तस्य कानिचिल्लिखितपुस्तकानि अन्येषामपि केषांचन चतुर्णां खिलानामेकं पुस्तकं तञ्जौरनगरस्थसरस्वतीमहालग्रन्थालयस्थं मया समवलोकितम्। परं तत्रस्थखिलेषु पाठभेदानां विभिन्नत्वाभावात्तेषामपि नामनिर्देशो न कृतः।

लण्डननगरे इण्डिया-ऑफिसग्रन्थालये आश्वलायनमन्त्रसंहितायाः पुस्तकद्वयं (३७८, ३७९ क्रमाङ्कितं) अस्ति। आश्वलायनश्रौतसूत्रे गृह्यसूत्रे च ये ऋङ्मन्त्राः प्रतीकत्वेनोद्धृतास्तेऽस्मिन् संगृहीताः। तेषूद्धृतानां खिलसूक्तानां पाठा मुद्रितपुस्तकपाठेभ्यः क्वचिद्भिन्नाः। इयमाश्वलायनमन्त्र-संहिता डॉ. वि. म. आपटे-महोदयैरेकस्मिन्निबन्धे सविस्तरमुपवर्णिता। तद्वर्णनमनुसृत्य तत्पुस्तकस्थाः खिलसूक्तपाठविशेषा मया तत्तत्स्थानेषु संगृहीताः। तत्र ३७८ क्रमाङ्कयुतस्य पुस्तकस्य "आश्वमंसं[१]" इति संज्ञा मया दत्ता ३७९–तमस्य पुस्तकस्य च "आश्वमंसं[२]" इति। यत्रोभयोः पाठः समानस्तत्र केवलं "आश्वमंसं" इति संज्ञा।

कलिकातानगरस्थ–रॉयल एशियाटिक सोसायटी–ग्रन्थालये ऋग्वेदस्य पुस्तकद्वयं (संहिता क्रमाङ्कः १२० [६६०७] पदानि क्रमाङ्कः १४०[६६०८]) वर्तते। तस्मिन् खिलान्यन्तर्भूतानि दृश्यन्ते। तत्पुस्तकद्वयसंपादनार्थं बहु प्रयतितेऽपि महायुद्धसंहारभिया देशान्तरे प्रेषितत्वात्तदुपलब्धुं नाशक्नवम्। तस्य ग्रन्थालयस्य सूचीपत्रे एतयोः पुस्तकयोर्यद्वैशिष्ट्यं प्रदर्शितं तदनुसृत्य तत्रस्थ-खिलविषये विचारयामि। संहितापुस्तके सप्तमाष्टकमष्टादशखिस्तशताब्दे नागरीलिप्यां लिखित-मस्ति। तस्मिन् 'पावमानीः स्वस्त्ययनीः' इति खिलं मॅक्समुल्लरपाठानुसारि लिखितम्। तत्रैवाष्टमा-ष्टकं पञ्चदशखिस्तशताब्दे लिखितमस्ति। तस्मिन् 'अविधवा भव वर्षाणि' इति खिलं (३.१७) लिखितं वर्तते। तथा च 'येनेदं भूतम्' इत्याद्या शिवसंकल्पोपनिषद् (खिल ४. ११) २८ मन्त्रा-त्मिका तत्र लिखिता स्यात् यतः 'गोभिर्जुष्टो धनेन' इत्येकोनविंशो मन्त्रस्तस्मिन् विद्यत इति सूचीपत्राज्ज्ञायते। एवमेव 'संज्ञानमुशना' 'नैर्हस्त्यं सेनादरणं' 'प्राध्वराणां पते' 'विदा मघवन् विदा' इति खिलान्यपि तत्र लिखितानि। पदपुस्तके षष्ठाष्टकस्य पदपाठः संवत् १६५३ मध्ये लिखितोऽस्ति। चतुर्थाध्याये एतत्पुस्तकापेक्षया एकं सूक्तं मॅक्समुल्लरपुस्तकेऽधिकमस्तीति सूचीपत्र-कारैर्लिखितम्। कस्यचित् (नूनं दशमस्य) वालखिल्यसूक्तस्याधिक्यं तेषामभिप्रेतमिति प्रतिभाति।

औन्धपुस्तके कियांश्चित् खिलभाग इतरपुस्तकापेक्षयाधिको वर्तते। तस्य पाठादिवैशिष्ट्यं मया टिप्पणीषु प्रदर्शितमेव। खिलद्वये (४. ५; ४. ११) काश्मीरपुस्तके वर्तमानस्त्रुटितो भाग औन्ध-पुस्तक उपलब्धः स तत्र विनिवेशितः। ३. २० खिले काश्मीरपुस्तके वर्तमाना त्रुटिः जुनागडपुस्तका-धारेण परिपूरिता। अन्यत्रापि बहुषु स्थलेषु काश्मीरपुस्तके त्रुटयो विद्यन्ते किंतु तासां पूरणं लिखित-पुस्तकाभावान्मुद्रितपुस्तकाभावाच्चाशक्यम्।

एकादश वालखिल्यसूक्तानि यद्यपि परिपाटीमनुसृत्याष्टमे मण्डले मुद्रापितानि तथापि काश्मीर-पुस्तके खिलग्रन्थे तेषां समावेशादत्रापि तानि यथास्थलं (१. ४; ६; ३. १-८; १८) मुद्रा-पितानि। काश्मीरपुस्तके वालखिल्यसूक्तेषु पाठभेदा उपलभ्यन्ते तेऽवश्यं द्रष्टव्याः।

काश्मीरखिलग्रन्थे क्वचन अशुद्धा अपि पाठा उपलभ्यन्ते। एतादृशेषु स्थलेषु शेफ्टेलोविट्स-महाशयैः समानवैदिकपाठाधारेण अभ्यूहेन वा शुद्धाः पाठाः स्वीकृताः पुस्तकस्था अशुद्धाः पाठाः टिप्पणीषु समुल्लिखिताश्च। पूर्वं निर्दिष्टानि मुद्रितखिलपुस्तकान्यपि तैर्दृष्टानि तत्स्थाः पाठभेदा

अपि निर्दिष्टाः। खिलानां संहितादिग्रन्थानां च यत्र रचनासाम्यं विद्यते तादृशानि स्थलानि तत्संबद्धाः पाठभेदाश्च तैः समुल्लिखिताः।ताननुसृत्य मयापि प्रतिखिलं टिप्पणी दत्ता किंतु न तस्य टिप्पणी यथातथमुद्धृता। रचनासाम्यविषये मूलग्रन्थानवलोक्य आवश्यकतानुसारं शोधनं न्यूनपूरणं च संपादितम्। येऽधिकाः खिलमन्त्राः पाठभेदा वा मुद्रितपुस्तकेषु लिखितपुस्तकेषु चोपलब्धास्ते टिप्पण्यां संगृहीताः। काश्मीरपुस्तकस्थखिलपाठः शेफ्टेलोविस्त्झमहाशयैः यथा मुद्रितः प्रायस्तथैव मयापि स्वीकृतः। यत्र क्वचित् पाठविषय आशङ्कासीत्तत्र काश्मीरपुस्तकमपि मयावलोकितम्। यत्र काश्मीरपुस्तकस्थं पाठं त्यक्त्वा शुद्धः पाठः साधारं तैः स्वीकृतः अशुद्धः पाठश्च टिप्पण्यां निर्दिष्टस्तत्र तादृशोऽशुद्धः पाठो मया न निर्दिष्टः। केषुचित्स्थलेष्वशुद्धं पाठं खिले तथैव स्थापयित्वा शुद्धः पाठः तैः टिप्पण्यां संसूचितः। एतादृशाः केचन सूचिताः पाठा विशेषतः सौपर्णसूक्तगता मया मूले विनिवेशिताः। पाठविनिश्चितिं वर्जयित्वान्येऽपि केचन विषयास्तेषां टिप्पणीष्वागतास्ते तत्रैव द्रष्टव्याः। क्वचित् लिखितपुस्तकस्थमशुद्धं पाठं त्यक्त्वा मुद्रितपुस्तकाधारेण लिखितपुस्तकाधारेण वा शुद्धः पाठो मयापि स्वीकृतः। ए. बी. कीथमहाशयैः काश्मीरखिलग्रन्थविमर्शसमये त्रयः शुद्धाः पाठाः संसूचितास्तेऽत्र स्वीकृताः।

खिलानां टिप्पण्यो मया संस्कृतभाषायामेव लिखिताः। लेखनसंक्षेपसिद्ध्यर्थं कानिचिच्चिह्नानि प्रयुक्तानि तानि संक्षेपविवरणे प्रदर्शितानि। टिप्पणीलेखने तावदयं क्रमः स्वीकृतः—

(१) अध्यायस्यानुक्रमणी अध्यायस्यादौ दत्ता। अनुक्रमणीपाठभेदा अप्यत्रैव निर्दिष्टाः।

(२) ऋग्वेदसंहितायां खिलं यत्र पठनीयं तस्य स्थानस्य निर्देशः।

(३) येषु येषु ग्रन्थेषु खिलं पूर्णतयांशतो वा मुद्रितं तेषां नामनिर्देशः।

(४) येषु येषु वैदिकग्रन्थेष्वितरग्रन्थेषु च खिलं पूर्णत्वेनांशतो वा मन्त्रक्रमभेदेन पाठभेदेन वागतं तेषां नामादिनिर्देशः।

(५) मन्त्रक्रमेण पाठभेदनिदर्शनम्। स्वीकृतपाठः स्थूलाक्षरैः प्रथमं विन्यस्तः तदाधारभूतग्रन्थनामभिः सह। अनन्तरं पाठभेदास्तत्तद्ग्रन्थनिर्देशेन दत्ताः। यत्र स्वीकृतपाठस्याधारो न प्रदर्शितः पाठभेदस्याधारश्चाल्पः तत्र स्वीकृतपाठाधारस्य बलीयस्त्वान्निर्देशो न कृत इति मन्तव्यम्।

(६) मुद्रितखिलपुस्तकेषु इतरग्रन्थेषु च विद्यमाना अधिका मन्त्राः।

(७) अधिकानां मन्त्राणां पाठभेदाः।

खिलसूक्तानां निर्माणकालस्तेषामृग्वेदसंहितया बाष्कलादिशाखाभिः संबन्धश्चेत्येतस्मिन् विषये शेफ्टेलोविस्त्झमहाशयैः जर्मनभाषायां लिखिते स्वीये पुस्तके निबन्धेषु च बहु प्रपञ्चितम्। तस्य सारोऽत्रैवाङ्ग्लभाषानिबद्धायां प्रस्तावनायामुद्धृतः।

शेफ्टेलोविस्त्झमहाशयैर्मुद्रितं काश्मीरखिलग्रन्थमनुसृत्य मयात्र खिलानि संगृहीतानीति पूर्वमेवोक्तम्। अतस्तेभ्यः प्रथमं धन्यवादवितरणमुचितं मन्ये। इतराणि मुद्रितखिलपुस्तकानि अन्ये संस्कृतग्रन्थाश्च खिलपाठनिर्धारणे मयोपयुक्तास्तेषां कर्तारोऽपि धन्यवादार्हाः। औन्धनगरस्थाः पंडित· सातवळेकरमहोदयाः स्वसंपादितऋग्वेदशाङ्खायनसंहितापुस्तकद्वयमुपयोगार्थं दत्त्वा मामुपकृतवन्तोऽतस्ते विशेषतो धन्यवादार्हाः। तथा च तञ्जौर-तिरुपती-अड्यार-इत्यादिनगरस्थग्रन्थालयगतानि बहूनि लिखितखिलपुस्तकानि मया दृष्टानि। तेषामधिकृतेभ्योऽपि मया धन्यवादा वितीर्यन्ते। आङ्ग्लजर्मनभाषयोर्लिखिताः केचन ग्रन्था निबन्धाश्च मयास्य ग्रन्थस्य रचनार्थमवलोकितास्तेषां कर्तारोऽपि धन्यवादार्हाः। अन्ते चास्मिन् खिलमुद्रणविषये यैर्विद्वद्भिः संसूचनेन मुद्रितपुस्तकप्रदानेनान्यप्रकारेण वा साहाय्यमाचरितं तेभ्योऽपि धन्यवादान् वितरति

विद्वद्वशंवदः
**चिं. ग. काशीकरः**

---

# खिलटिप्पणीषु निर्दिष्टानां ग्रन्थानां संक्षेपसूची

अथर्व = अथर्ववेदसंहिता
अन्त्ये = अन्त्येष्ट्यर्कः ( मुम्बापुरीमुद्रितः )
अल = पीटर्सनमहोदयेन प्रकाशितानि अलवरनगरस्थलिखितपुस्तकगतानि ऋग्वेदपरिशिष्टानि[1] ।
आउ = आउफ्रेक्ट्महोदयप्रकाशिता ऋग्वेदसंहिता
आचं = आह्निकचन्द्रिका
आपगृ = आपस्तम्बगृह्यसूत्रम्
आपमं = आपस्तम्बमन्त्रपाठः
आपश्रौ = आपस्तम्बश्रौतसूत्रम्
आर्षानु = आर्षानुक्रमणी ( बिब्लिओथिका इंडिका सेरिज् , कलकत्ता )
आश्वगृ = आश्वलायनगृह्यसूत्रम्
आश्वमंसं = आश्वलायनमन्त्रसंहिता[2]
आश्वश्रौ = आश्वलायनश्रौतसूत्रम्
आसू = आह्निकसूत्रावलिः ( मुम्बापुरीमुद्रिता )
ऋग्वि = ऋग्विधानम् ( लवपुरे पं. जगदीशशास्त्रिणा मुद्रापितम्, संवत् १९९७ )
ऋप्रा = ऋग्वेदप्रातिशाख्यम् ( डॉ. मंगलदेवशास्त्रिभिः संपादितम् )
ऋब्र = ऋग्वेदीयब्रह्मकर्मसमुच्चयः ( मुम्बापुर्यां मुद्रितः )
ऋमं = ऋग्वेदमन्त्रपाठः ( मुम्बापुर्यां निर्णयसागरयन्त्रालये १८९१ खिस्ताब्दे मुद्रितः )
ऋसं = ऋग्वेदसंहिता
ऐआ = ऐतरेयारण्यकम्
ऐब्रा = ऐतरेयब्राह्मणम्
औंध = औंधनगरे पं. सातवळेकरमहोदयैः मुद्रिता ऋग्वेदसंहिता ( द्वितीयावृत्तिः )

कपिसं = कपिष्ठलकठसंहिता
का = काश्मीरदेशे शारदालिप्यां लिखितो खिलग्रन्थः[3]
कासं = काठकसंहिता
कौसू = कौशिकगृह्यसूत्रम्
क्रिप्रसं = क्रियमाणप्रयोगसंग्रहः ( अहमदाबादनगरे प्रकाशितः )
खागृ = खादिरगृह्यसूत्रम्
खिलानु = खिलानुक्रमणी
गोगृ = गोभिलगृह्यसूत्रम्
गोब्रा = गोपथब्राह्मणम्
जुना = जुनागडलिखितपुस्तकम्[4]
तं = तञ्जौरग्रन्थालयस्थलिखितपुस्तकम्
तैआ = तैत्तिरीयारण्यकम्
तैब्रा = तैत्तिरीयब्राह्मणम्
तैसं = तैत्तिरीयसंहिता
तैसंध्या = तैत्तिरीयसंध्याभाष्यम् ( पुण्यपत्तने १८९९ खिस्ताब्दे मुद्रितम् )
धपंशां = धनिष्ठापञ्चकशान्तिः(मुम्बापुरीमुद्रिता)
धसिं = धर्मसिन्धुः
निरु = निरुक्तं यास्काचार्यकृतं
नृताउ = नृसिंहतापनीयोपनिषत्
पंब्रा = पञ्चविंशब्राह्मणम्
पञ्चामृ = पञ्चामृताद्यभिषेकसूक्तम् ( मुम्बापुरीमुद्रितं शके १८०७ )
पागृ = पारस्करगृह्यसूत्रम्
पैप्प. अथर्व = पैप्पलाद-अथर्ववेदसंहिता ( लवपुरे डॉ. रघुवीरेण परिष्कृता )
प्रर = प्रयोगरत्नं नारायणभट्टकृतं ( मुम्बापुर्यां मुद्रितं शके १७८३ )

---

1. A second Report of operations in search of Sanskrit MSS. in the Bombay Circle by Peter Peterson, Bombay 1884.

2. India Office Library MSS. Nos. 378 [1970] and 379 [781] as described by Dr. V. M. Apte in ABORI Vol. XX, Parts III-IV, pp. 249-61, 1938-39. आश्वमंसं[1] = MS. No. 378; आश्वमंसं[2] = MS. No. 379.

3. Apokryphen des Ṛgveda, Dr. phil. J. Scheftelowitz, Breslau 1906.

4. See Preface p. 894.

बौधसू = बौधायनधर्मसूत्रम्
बृहदे = बृहद्देवता ( हार्वर्ड ओरिएण्टल् सेरीज् )
मॅ = मॅक्समुलरमहोदयेन प्रकाशिता सभाष्या ऋग्वेदसंहिता
मनाउ = महानारायणोपनिषद्
मंदी = मन्त्रार्थदीपिका ( काश्यां प्रकाशिता )
मभा = महाभारतम् (पुण्यपत्तनस्थ-भाण्डारकर-प्राच्यविद्यासंशोधनमन्दिरमुद्रितम् )
मंब्रा = मन्त्रब्राह्मणम्
मागृ = मानवगृह्यसूत्रम्
मामंसं = माध्यंदिनमन्त्रसंहिता
माश्रौ = मानवश्रौतसूत्रम्
मु = मुम्बापुरीमुद्रिता सभाष्या ऋग्वेदसंहिता
मैसं = मैत्रायणीसंहिता
म्यु = लण्डननगरे ब्रिटिशम्युझीअम्मध्ये वर्तमानमृग्वेदसंहितायाः लिखितपुस्तकम्[1]
वासं = वाजसनेयिसंहिता
विप = विवाहपद्धतिः ( मुम्बापुर्यां १८८६ खिस्ताब्दे मुद्रिता)
वैसू = वैतानश्रौतसूत्रम्
शब्रा = शतपथब्राह्मणम्
शांआ = शाङ्खायनारण्यकम्
शांक = शांतिकमलाकरः
शांगृ = शाङ्खायनगृह्यसूत्रम्
शांब्रा = शाङ्खायनब्राह्मणम्
शांम = शान्तिमयूखः ( मुम्बापुर्यां १८०६ शके मुद्रापितः )
शांश्रौ = शांखायनश्रौतसूत्रम्
शांसा = शांतिसारः ( मुम्बापुर्यां १७८३ शके मुद्रितः )
श्वेउ = श्वेताश्वतरोपनिषद्
संकौ = संस्कारकौस्तुभः ( मुम्बापुर्यां खिस्ताब्दे १८६१ मुद्रितः )
संभास = संध्याभाष्यसमुच्चयः ( पुण्यपत्तने १८९९ खिस्ताब्दे मुद्रितः )
साम = सामवेदसंहिता
सामविब्रा = सामविधानब्राह्मणम्
सुप = सुपर्णाध्यायः
हिगृ = हिरण्यकेशिगृह्यसूत्रम्
हिश्रौ = हिरण्यकेशिश्रौतसूत्रम्
हिसंध्या = हिरण्यकेशित्रिकालसंध्या ( मुम्बापुरीमुद्रिता )

---

## संक्षेपचिह्नानि

| | | |
|---|---|---|
| ≡ | = | समानम् [ identical with ] |
| ≐ | = | अंशतः समानम् [ approaches or partly identical with ] |
| → | = | द्रष्टव्यम् [ Cf. ] |

मन्त्रसंख्याया उपरितने कोणे विद्यमाना संख्या प्रायो मन्त्रस्य अर्धसंख्यां बोधयति ।

---

1. No. Add 5351, Comp. Khila IV. 11.

# अथ खिलानि

## प्रथमोऽध्यायः

ॐ नमो विष्णवे। अथ खिलेषु सूक्तप्रतीकाद्युक्तं प्रयोजनं ......... शतर्च्यादीनामधिदैवता लक्षणानि च। छन्दसां चाधिक्यं च। कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिरित्यशीत्यक्षरादीनि,[1] चतुरुत्तराण्येव[2] यजूंषि, संख्यानुवर्तनादितुल्यं ऋषीणां च तुल्यनाम्नां गोत्रमनादेशे, खिलान्यन्तरं मन्त्रोक्तान्येव संख्यादीनि संभवेत् ॥

१. → खिल ४.९

२. निवित् पुरोरुचः प्रैषाः कुन्तापा इति चत्वारि यजूंषि

सं तृचं शश्वत् पळ्ना तार्क्ष्यः सुपर्ण आश्विनं वै तत् सप्तम्याग्नेयी परा ऐन्द्री एकादशी वा नवमी लिङ्गोक्ता देवता अष्टम्यादि[1] विराड्रूपाश्चतस्रो[1] जगत्य उरोबृहती प्र सप्त ब्राह्म्यो निषदुपनिषदौ द्वितीया जगती षष्ठी विराट्स्थाना ज्योतिष्मन्तं दश भारद्वाजो ज्योतिष्माँ षष्ठयाद्या लिङ्गोक्तदेवतामानुष्टुभ्नवम्यन्त्ये च कृश एकादशाश्विनः कृश आद्याः षड् लिङ्गोक्तदेवता आनुष्टुभमिमानि सप्तापुनर्दोप ऐन्द्रावरुणं जागतमयं षड् रेतागाङ्ग्यो यदा तृचं यामुनिः प्रणेता यं षड् यज्ञवत्सोऽयं चतुष्कं गौरीवीतिरिद्मष्टौ चक्षुपी आश्विनापदोषः षष्ठी जगत्यत्रानुक्तगोत्राः सौपर्णाः ॥

१. 'अष्टमी विराड्रूपा चतस्रो' इति साधु

---

१

समैक्षिष्योर्ध्वमहस आदित्येन सहीयसा। अहं यशस्विनां यशो विश्वा रूपाण्या ददे ॥ १ ॥
उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा। दीर्घायुत्वस्य हेशिषे तस्य नो धेहि सूर्य॥ २ ॥
उद्यन्तं त्वा मित्रमह आरोहन्तं विचक्षण। पश्येम शरदः शतं जीवेम शरदः शतम् ॥ ३ ॥
**अभि त्यं मेषं पुरुहूतमृग्मियम्० ॥ ऋ. सं. १.५१.१**

ऋसं १.५० अनन्तरं पठनीयम्।

मॅ१–आउ१–औंध।

१. **समैक्षिष्योर्ध्वमहस**–का; शनैश्चित्सूर्येण–मॅ-आउ; शनैश्चिदद्य सूर्येण–औंध. **विश्वा रूपाण्या**–का; विद्यारूपाण्या–मॅ-आउ; विद्यारूपमुपा–औंध। २. ≡ तैब्रा ३.७.६.२२; २[2] ≡ खिल१.५.५[2]; **धेहि**–का; देहि–तैब्रा-मॅ-आउ। ३[1]. ≐ ऋसं १.५०.११; तैब्रा ३.७.६.२२. ३[2] ≡ ऋसं ७.६६.१६; अथर्व १९. ६७. १-२; मैसं ४.९.२०; वासं ३६.२४; तैआ ४.४२.५; मागृ १.२२.११[2]; हिगृ १.७.१०; पागृ १.११.९; मंपा २.५.१३-१४. ३ ≡ खिल १.५.६;→ऋसं १०.३७.७-८।

२

शश्वन्नासत्या युवयोर्महित्वं गावो अर्चन्ति सदमित्पुरुक्षू।
यदूहथुरश्विना भुज्युमस्तमनारम्भणे अध्वनि तौग्र्यमस्तम् ॥ १ ॥
यदश्वं श्वेतं दधतो अभिघ्नन्नासत्या भुज्यू सुमताय पेरवे।
तां वां रतिं विदथेषु विप्रा रेभन्तो दस्रावगमन्मनस्युम् ॥ २ ॥

आ नो विपन्यू सवनं जुषेथामा वां हंसाः सुयुजो वहन्तु ।
युवां स्तोमासो जनयो न मर्या उशन्तो दस्रा वृषणा सचन्ते ॥ ३ ॥
आ नो यातं त्रिवृता सोमपेयं रथेन द्युक्षा सवनं मदाय ।
स्तीर्णं वां बर्हिः सुषुता मधूनि युक्ता होतारो रथिराः सुहस्ताः ॥ ४ ॥
वासात्यौ चित्रौ जगतो निधानौ द्यावाभूमी शृणुतं रोदसी मे ।
तावश्विना रासभाश्वा हवं मे शुभस्पती आगतं सूर्यया सह ॥ ५ ॥
प्रेषः सन्तु मधुनो घृतस्य तीव्रं सोमं नि वपन्तु शुष्मिणः ।
एवं तया युवत्यश्विनौ बाहू ऊर्जं दुहतु मधुना घृतेन ॥ ६ ॥
अग्ने मन्दन्तु यतयः स्तोमाः प्र णु त्यं दिवं यान्ति घर्मम् ।
चतुर्दशं त्रिदिवं युवानमोजो मिमातु द्रविणं सुमेके ॥ ७ ॥
हरिं हिनोमि दयमानो अंशुं पुरुमीळ्हं ऋषभं जयान् ।
हर्यश्वं हरितः सप्ताश्वं युक्तानेमिं त्रिनाभिं वरुणं प्रगाथः स्वस्तये ॥ ८ ॥
सोमो वैष्णवं महिमानमोजः सप्त ऋषयः सुवीरा नराः प्रीगयन्ति ।
सौधन्वनासः सुहस्ताः शमीभिस्त्वष्टमाङ्गिरसमृभवं स्वस्तये ॥ ९ ॥
इहैह वो मघवान्नि दधामि ध्रुवं तीव्रं च तं हृदियन्तं बृहस्पतिम् ।
सं ते दधामि द्रविणं हविष्मते घर्मश्चित्तप्तः प्रवृजे वहन्ति ॥ १० ॥
शश्वत्सौपर्णौ विषितस्तुकं वायसं विश्वभुजः पथिरक्षी नृचक्षसौ ।
इयं हिं त्वा दयमानं पृचद्भिर्मा वायसो दोषा दयमानो अबूबुधत् ॥ ११ ॥
तमेकनेमिं त्रिवृतं षोळशारं शतावारं विंशतिं प्रत्यराभिः ।
अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥ १२ ॥
सदं सदमेकमेकं तस्थुषः पञ्चत्रिंशादशापरम् । त्रिंशतं शिवं नवगुह्यं यज्ञमष्टषष्ठं विदत् ॥१३॥
अतिष्ठद्वज्रं वृत्रणं सुवीरं दधन्वं देवाँ हरिमिन्द्रकेशम् ।
आयाँ इन्द्रः षोळशीँ शर्म यच्छतु षड्वर्मिणमेकं ध्रुवन्ति साकम् ॥ १४ ॥

एतदादीन्येकादश सौपर्णसूक्तानि । तथा चात्र बृहद्देवता ( ३.११८-११९ )–'शश्वद्धि वामिति । दशाश्विनानीमानीति इन्द्रावरुणयोः स्तुतिः । सौपर्णेयास्तु याः काश्चिन्निपातस्तुतिषु स्तुताः'[1] ॥ ऋग्विधानमपि ( १.१०८ )–'सौपर्णानि पवित्राणि सूक्तान्येकादशाभ्यसेत् । वाञ्छन् पुत्रान् पशून् वित्तं स्वर्गमायुरनन्धताम्'[2] ॥

१. → ऋसं १.११६.५ : यदश्विना ऊहथुर्भुज्युमस्तम् । २[1]. 'यदश्वं श्वेतं दधतुरहिघ्नन्नासत्या भुज्यू सुमताय पेदवे' इति शुद्धं स्यात् । ३[2]. **सचन्ते**; सचेन्ते-का → ऋसं १.११६.६; ११७.९; ११८.९; ११९.१०; १०.३९.१०; ७.७१.५. **४. आ नो यातं** → ऋसं ४.४४.५; ८.८.५. **रथिराः**; रथिनाः इति का-पुस्तकस्थो मुद्रितपाठोऽशुद्धः स्यात् । खिल १.३.३; १०.३ द्रष्टव्यम्[3] । **५.** ≡ तैआ १.१०.२. **वासात्यौ**–का-तैआ; → निरु १२.२. **शृणुतं रोदसी मे**–का; चरथः सं

सखायौ–तैआ। ६. **प्रेषः** ( = प्र + इषः ); पेर्षः–का. **ऊर्जं दुहतु**–का; → ऋसं ८.७२.१६; १००.१०. ७. **मन्दन्तु**; मद्न्तु–का. **ओजो मिमातु**–का; 'ओजो मिमाते' इति भाव्यं → ऋसं ७.८२.६। ८. **अंशु**–का; अंशुं ? → हरिरंशुः–ऋसं९.९२.१. **हरितः**–का; हरितं ? **युक्तानेमिं**–का; युक्तनेमिं ? **प्रगाथः** इति पदं सर्वथानावश्यकम्। ९[1]. **प्रीणयन्ति**–का; 'प्रीणन्ति' इति मूलपाठः स्यात्. ९[2].→ ऋसं ३.६०.३: इन्द्रस्य सख्यमृभवः समानशुर्मनोर्नपातो अपसो दधन्विरे। सौधन्वनासो अमृतत्वमेरिरे विष्ट्वी शमीभिः सुकृतः सुकृत्यया; → ऋसं ७.३५.१२ : शं न ऋभवः सुकृतः सुहस्ताः। १०. **इहेह**–का; इहेह ? **घर्मश्चित्तप्तः प्रवृजे** ≡ ऋसं ५.३०.१५. ११[2]. **इयं** 'इ' धातो रूपं;→ इयाम्–ऋसं ७.८६.४. **पृचाद्भिः**–का; पृच्चद्भिः पृदद्भिः इति वा स्यात्। **अबूबुधत्**; अबुबुधत्–का; → खिल ५.११.१. **१२.** ≡ श्वेउ १.४. **षोळशारं शतावारं**–का; षोडशान्तं शताधारं–श्वेउ → मभाआदि. १.३.६४ : एकां नाभिं सप्तशता अराः। १३[1]. **सदमेकमेकं**; सदमेकमकं–का. **दश°**–का; 'दशं' इत्यपि संभवेत्। १४[1]. **दधन्वं देवाँ**→ ऋसं ८.१९.१. १४[2].→ वासं २६.१०; तैसं १.४.४१ : महाँ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु।

1. Cf. Bṛhaddevatā, Part II. pp. 112-13.

2. For the Ṛgvidhāna I have used the edition in Roman characters of Rudolf Meyer ( Berlin 1878 ) as well as the Sanskrit transliteration of the same by Pandit Jagadish Shastri ( Lahore, 1940 ). The transliterator does not seem to have paid proper attention to the Khilas treated in the Ṛgvidhāna. By *Sauparṇāni* he means RV. I. 74-84 ! See also notes to Khila IV. 11.

3. Cf. A. B. Keith, JRAS 1907, p. 225.

## ३

प्र धारा यन्तु मधुनो घृतस्य यदविन्दतं सूरी उस्रियायाम्।
मित्रावरुणौ भुवनस्य कारू ता मे अश्विना जुषतां सवना ॥ १ ॥
सुखं रथं शतयावानमाशुं प्रातर्यावाणं सुषदं हिरण्ययम्।
आ तिष्ठथत्र दुहिता विवस्वतस्तमेवावाश्वमवसे करामहे ॥ २ ॥
ये वामश्वासो रथिरा विपश्चितो वातध्राजिरः सुयुजो घृतश्चुतः।
येभिर्याथ उप सूर्यां वरेयं तेभिर्नो दस्रा वर्धतं समत्सु ॥ ३ ॥
यद्वां रेतो अश्विना पोषयित्नु यद्रासभो वध्रिमत्यैः सुदानू।
यस्माजज्ञे देवकामः सुदक्षस्तदस्यै दत्तं भिषजावभिद्यु ॥ ४ ॥
यन्नासत्या भेषजं चित्रभानू येनावथुस्तोककामामु नु घोषाम्।
तदस्यै दत्तं त्रिषु पुंसु वध्वै येनाविन्दतु नयं सा सुहस्त्यम् ॥ ५ ॥
वषड् वां दस्रावस्मिन्सुते नासत्या होता कृणोतु वेधाः।
सिस्रतां नार्यृतप्रजाता वि पर्वाणि जिहतां सूतवा उ ॥ ६ ॥
एवा निषचोपनिषच विप्रा युवा रेभत्यौ सयुजा सुपर्ण्यौ।
ब्रह्माण्यक्रतुर्विदथेषु शक्रा धत्तं तयोस्तनयं तोकमग्र्यम् ॥ ७ ॥

इदं सूक्तं आश्वगृ ३.१२.१४ मध्ये निर्दिष्टम्; ऐब्रा ६.२५.७; ८.१०.४ सायणभाष्येः–'प्र धारा यन्तु मधुन इति सौपर्णसूक्तम्'।

२[२]. → ऋसं १०.३८.४ : अर्वाञ्चमिन्द्रमवसे.करामहे। ३[१]. **वातध्राजिषः**→तैआ १.११.७ : वातध्राजिगति. ३[२]. **याथ उप सूर्या वरेयं**→ऋसं १०.८५.१५ ≡ अथर्व १४.१.१५ : अयातं ......वरेयं सूर्यामुप। ६[१]. ≡ अथर्व १.११.१[१]: वषट् ते पूषन्नस्मिन्त्सूतावर्यमा होता कृणोतु वेधाः। ६[२]. ≡ अथर्व १.११.१[२]।

४

ज्योतिष्मन्तं केतुमन्तं त्रिचक्रं सुखं रथं सुषदं भूरिमायम्।
चित्रामघा यस्य योगेऽधिजज्ञे तं वां हुवे अति रिक्तं पिबध्यै ॥ १ ॥
युवं देवा क्रतुना पूर्व्येण युक्ता रथेन तविषं यजत्रा।
आ गच्छतं नासत्या शचीभिरिदं तृतीयं सवनं पिबाथः ॥ २ ॥
युवां देवास्त्रय एकादशासः सत्या सत्यस्य दधिरे पुरस्तात्।
अस्माकं यज्ञं सवनं जुषाणा पातं सोममश्विना दीद्यग्नी ॥ ३ ॥
पनाय्यं तदश्विनाकृतं वां वृषभो दिवो रजसः पृथिव्याः।
सहस्रं शंसा उत ये गविष्टौ सर्वाँ इत्ताँ उप यातं पिबध्यै ॥ ४ ॥
अयं वां भागो निहितो यजत्रेमा गिरो नासत्योप यातम्।
पिबतं सोमं मधुमन्तमश्विना प्र दाश्वांसमवतं शचीभिः ॥ ५ ॥
ज्योतिष्मन्तं सुप्रतीकमजस्रेण भानुना दीद्यग्नी। शिवं प्रजानां कृणुष्व मा हिंसीः पुरुषं जगत्॥ ६॥
धाता रातिः सवितेदं जुषन्तां त्वष्टा यद्दूतो अभवद्विवस्वतः।
सं वामश्विभ्यामुषसा सजूस्तमूर्वं गव्यं महि गृणान इन्द्र ॥ ७ ॥
भरद्वाजस्य सुन्वतो यविष्ठा याह्यग्ने मधुमत्तमः सुतः।
सोमस्य मा तवसो दीध्यानो अच्छा कोशं जनयित्वावतो भुवत्॥ ८ ॥
अग्निः पृथुर्ब्रह्मणस्पतिः सोमो देवेष्वा यमत्। इन्द्रस्याधिपत्य मे बृहस्पते हवींषि ते ॥ ९ ॥
रुचं ब्राह्मयं जनयन्तो देवा अग्रे यदब्रुवन्। यस्त्वेदं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ १०॥

१. ≡ ऋसं ८.५८.३ ( वालखिल्य १०.३ ). २–५. ≡ ऋसं ८.५७.१–४ ( वालखिल्य ९ ). ४. ≡ अथर्व २०.१४३.९; आश्वश्रौ ९.११. १[१]. **भूरिमायं**–का; भूरिवारं–ऋसं.। ३. **सत्या**–का; सत्याः–ऋसं. **दधिरे**–का; ददृशे–ऋसं। ४[२]. **गविष्टौ**–का; गविष्टौ–ऋसं–अथर्व. **यातं**–का; याता–ऋसं। ५[२]. **°मश्विना**–का; °मस्मे–ऋसं। ६[१]. ≐ तैसं ४.१.३.१; ५.१.४.१; मैसं २.७.२ : ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम्. ६[२]. → मैसं २.७.२; तैसं ४.१.३.१; ५.१.४.१ : शिवं प्रजाभ्योऽहिंसन्तम्. **मा हिंसीः** ≡ अथर्व १८.४.३०; → मनाउ २.१० : मा नो हिंसीर्जातवेदो गामश्वं पुरुषं जगत्। ७. → वासं ८.१७; तैसं १.४.४४; अथर्व ३.८.२; मैसं १.३.३८; कासं ४.१२; १३.९; ऋसं१.५८.१ : धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो अग्निः। त्वष्टा यद्दूतो अभवद्विवस्वतः. **अश्विभ्यामुषसा सजूः** ≡ ऋसं १.४४.१४. **ऊर्वं गव्यं महि गृणान इन्द्र** ≡ ऋसं ६.१७.१। ८. **मधुमत्तमः सुतः** ≡ ऋसं ९.१०५.३. **सोमस्य मा तवसो** ≡ ऋसं ३.१.१; मैसं ४.११.२; कासं २.१५. **दीध्यानो**; दीध्याना–का. **अच्छा कोशं** ≡ ऋसं ९.१०७.१२। ९. **अग्निः**

**पृथुर्ब्रह्मणस्पतिः** ≐ अग्निः पृथुर्धर्मणस्पतिः–वासं १०.२९. **सोमो देवेष्वा यमत्** ≡ ऋसं ९.४४.५. **१०.** ≡ वासं ३१.२१; तैआ ३.१३.२. **ब्राहयं**–का; ब्राह्मं–वासं-तैआ. **यदब्रुवन्**–का; तदब्रुवन्–वासं-तैआ. **यस्त्वेदं**–का; यस्त्वैवं–वासं–तैआ ।

५

कृशस्त्वं भुवनस्पते पाति देवानामद्भुतः । अश्विना पातमस्मयू नासत्या तिरोअह्न्यम् ॥ १ ॥
त्वं तं सुपर्ण आभर दिवस्पुत्रा नि षेदिरे । अग्निः प्रजानामभवज्जातवेदो विचर्षणे ॥२॥
अग्निर्होता विभू वसुर्देवानामुत्तमं यशः । पुनरग्निः प्रजापतिर्वैश्वानरो हिरण्ययः ॥ ३ ॥
अग्निस्त्राता शिवो भवद्वरूथ्यो विश्वदेव्योः । द्रविणं पाहि विश्वतः सोमपा अभयंकरः ॥ ४ ॥
अग्ने निजहि मर्माण्यरातीनां च मर्मणाम् । दीर्घायुत्वस्य हेशिषे तस्य नो धेहि सूर्य ॥५॥
उद्यन्तं त्वा मित्रमह आरोहन्तं विचक्षण । पश्येम शरदः शतं जीवेम शरदः शतम् ॥६॥
कृशं च्यवानमृषिमन्धमश्विना जुजुर्वांसं कृणुथः कर्वरेभिः ।
अक्षण्वन्तं स्थूलवपुष्कमुग्रां पुनर्युवानं पतिमित्कनीनाम् ॥ ७ ॥
यो वां सोमैर्हविषा यो घृतेन वेदेन यो मनसा वाश शक्रा ।
स धत्ते रत्नं द्युमदिन्द्रवन्तं पुरुस्पृहं पृतनाज्यं सुवीरम् ॥ ८ ॥
प्र वां नरा सप्तवध्रिर्मनीषा गिरं हिन्वत्प्रतिवाभ्यामिदानीम् ।
वृक्षा समुद्धमुशना युवानमथ तं कृणुत मा विरप्शिनम् ॥ ९ ॥
अजोहवीत्सप्तवध्रिः सुहस्तो द्रुणि बद्धोऽयंसमानः ककुद्मान् ।
अरूरुजतं युवमस्य वृक्षमद्रिं न वज्री सुवृषायमाणः ॥ १० ॥
एवा कृशश्चकमानमना....: सुहवा रातिसूरः ।
ब्रह्मचक्रे युवयोर्वर्धनानि धत्तं तस्मै संदमरातिदद्धिम् ॥ ११ ॥

**१. भुवनस्पते**–का;→भुवनस्य पते–ऋसं ९.३१.६; प्रायः 'भुवनपते' इति प्रयोगः→वासं २.२; तैसं २.६.६.३; तैब्रा ३.७.६.१; शाश्रौ ४.२०.१; आश्वश्रौ १.४. **पातमस्मयू**→ऋसं १.१३५.५. **नासत्या तिरोअह्न्यं**–ऋसं ३.५८.७. **२. दिवस्पुत्रा** ≡ ऋसं ४.२.१५. **जातवेदो विचर्षणे** ≡ ऋसं १.७८.१; ६.१६.२९; ३६; ८.४३. २. **३[१]. विभू** (?)–का;→ऋसं १०.९१.१ : होता विभूः । **४[१].**→ऋसं ५.२४.१ : अग्ने त्वं......त्राता शिवो भव वरूथ्यः. **विश्वदेव्योः**–का; 'विश्वदेव्यः' इति शुद्धम् । **५[१]. मर्माणि**–का; वर्माणि ? →ऋसं ६.७५.१८ : मर्माणि ते वर्मणा छादयामि. **५[२]–६.** ≡ खिल १.१.२[२]-३;→ऋसं १०.३७.७-८ । **७.**→ऋसं १०.३९.३[२]-४[१] : अन्धस्य चिन्नासत्या कृशस्य चिद्युवामिदाहुर्भिषजा रुतस्य चित् । युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः;→ऋसं १.११७.१३ : युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः;→तांब्रा १४.६.१०. **ऋषिमन्धमाश्विना** ≡ खिल १.१२.७. **पातिमित्कनीनां**→ऋसं १.११६.१० : इत्पतिमकृणुतं कनीनाम् । **८. वाश**–का; वाशे ( = वा + आशे ) ? । **९[१].** ≐ ऋसं ८.७३.९. **वृक्षा**–का; वृक्षे ? **समुद्ध°**–का; संबद्धं ? → ऋसं ६.७८.६ । **१०[१]. सुहस्तो**; सुहस्त-का. **१०[२].**→ ऋसं ५.७८.५; **६. सुवृषायमाणः**→ऋसं १.३२.३ । **११[२]. ब्रह्मचक्रे** ≡ षेउ १.६.

६

इमानि वां भागधेयानि सिस्रत इन्द्रावरुणा प्र महे सुतेषु वाम् ।
यज्ञे यज्ञे हि सवना भुरण्यथो यत्सुन्वते यजमानाय शिक्षथः ॥ १ ॥
निष्षिध्वरीरोषधीराप आभ्यामिन्द्रावरुणा महिमानमाशत ।
या तस्थतू रजसस्पारे अध्वनो ययोः शत्रुर्नकिरादेव ओहते ॥ २ ॥
सत्यं तदिन्द्रावरुणा घृतश्चुतं मध्व ऊर्मिं दुहते सप्त वाणीः ।
ताभिर्दाश्वांसमवतं शुभस्पती यो वामदब्धो अभि पाति चित्तिभिः ॥ ३ ॥
घृतप्रुषः सौम्या जीरदानवः सप्त स्वसारः सदन ऋतस्य ।
या ह वामिन्द्रावरुणा घृतश्चुता ताभिर्दक्षं यजमानाय शिक्षतम् ॥ ४ ॥
अवोचाम महते सौभगाय सत्यं त्वेषाभ्यां महिमानमिन्द्रियम् ।
अस्मान्स्विन्द्रावरुणा घृतश्चुता त्रिभिः सप्तेभिरवतं शुभस्पती ॥ ५ ॥
इन्द्रावरुणा यदृषिभ्यो मनीषां वाचो मतिं श्रुतमधत्तमग्रे ।
तानि च्छंदांस्यसृजन्त धीरा यज्ञं तन्वानास्तपसाभ्यपश्यन् ॥ ६ ॥
इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम् ।
प्रजां पुष्टिं रयिमस्मासु धत्तं दीर्घायुत्वाय प्र तिरतं न आयुः ॥ ७ ॥

ऋसं ८.५९ ( वालखिल्य ११ ); ऐब्रा ६.२५ ( सायणभाष्यं ); शांश्रौ ९.२०.१४ ( भाष्यं ); बृहद्दे ३.११९ एतेभ्यो ज्ञायते यदिदं सौपर्णं सूक्तमिति । आश्वश्रौ.८.२; शांश्रौ १२.११.१७ अत्रापि निर्दिष्टम् ।

**१**[२]. **हि**–का; ह–ऋसं । **२. निष्षिध्वरीरोषधीराप** = ऋसं ३.५५.२२. **आभ्यामि°**–का; आस्तामि°–ऋसं. **महिमानमाशत** = ऋसं १.८५.२. **तस्थतू रजसस्पारे**–का; सिस्रतू रजसः पारे –ऋसं । **३**[१]. **घृतश्चुतं**–का; कृशस्य वां–ऋसं । **४**[२]. **दक्षं**–का; धत्तं–ऋसं । **५**[२]. **घृतश्चुता त्रिभिः सप्तेभि°**–का; घृतश्चुतास्त्रिभिः साप्तेभि°–ऋसं । **६. मनीषा**–का; मनीषां–ऋसं. **°मधत्तमग्रे**–का; °मदत्तमग्रे–ऋसं. **तानि च्छन्दांस्य°**–का; यानि स्थानान्य°–ऋसं. **°पश्यन्**–का; °पश्यं–ऋसं । **७**[२]. **रयिमस्मासु**–का; भूतिमस्मासु–ऋसं ।

७

अयं सोमः सुशर्मी अद्रिबुध्नः परिष्कृतो मतिभिरुक्थशस्तः ।
गोभिः श्रीतो मत्सरः सामगीतो मक्षू पर्वाते परि वां सुशिप्रा ॥ १ ॥
अस्य पाजसः पिबतं सुतस्य वारेष्ठाव्याः परिपूतस्य वृष्णः ।
तावश्विना जठरमा पृणेथामथा मनो वसुधेयाय धत्तम् ॥ २ ॥
एह यातं तन्वा३ शाशदाना मधूनि नक्षकमानौ नु मेधा ।
वि स्वा मन्द्रा पुरुरेजमाना युवायती हवते वां मनीषा ॥ ३ ॥
सुखं नासत्या रथमशुमन्तं स्योनं सुवह्निमधि तिष्ठतं युवम् ।
यं वां वहन्ति हरितो वहिष्ठा शतमश्वा यदि वा सप्त देवा ॥ ४ ॥

यं वेनं तागच्छतं मानवस्य शार्यातस्य शदनं शस्यमाना ।
अबीभयुः सधमादं चकानश्च्यवनो देवान्युवयोः स एषः ॥ ५ ॥
आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥ ६ ॥

१[२]. **गोभिः श्रीतो** ≡ ऋसं ८.८२.५ । २[२]. **जठरमा पृणेथां** ≡ ऋसं ६.६९.७. **अथा मनो वसुधेयाय** ≡ अथर्व ३.४.४ : अधा॰। ३[१]. **तन्वा३शाशदाना** ≡ ऋसं १.१२४.६ । ४. ≐ अथर्व १३.२.७ । ५[१]. → ऋसं १.११२.१६; १७; शब्रा ४.१.५.२; ऐब्रा ४.३२ । ६. ≡ ऋसं १.३४.१२.

८

यदा युञ्जाथे मघवानमाशुं पुरुस्पृहं पृतनाज्यं सुवीरम् ।
स्वश्वं दस्रा रथमा हवेषु तदा युतीयेति रसं तनूनाम् ॥ १ ॥
मन्दिष्ठा इमे कवयश्चरन्ति भरेषु न ग्रथिता तुवेशासः ।
वाचं हिन्वानाः पुरुपेशसं वा हविष्मती सवने मन्दयध्यै ॥ २ ॥
श्रुतं हवं तर्पयतं मखस्युं काममेषामा वहथो हवींषि ।
अध स्तोतॄन् यजमानं च पातमूतिभिर्नृपती या अभीके ॥ ३ ॥

१. **पुरुस्पृहं पृतनाज्यं सुवीरं** ≡ खिल १.५.८[१]. **रसं तनूनां** ≡ ऋसं ७.१०४.१० । २. **ग्रथिता**–का; ग्रथिताः ? ३[१]. **तर्पयतं...काममेषां** ≐ ऋसं १.५४.९ : तर्पय काममेषाम् ।

९

यं गच्छथः सुतपा देववन्तं हविष्कृतं वृषणा रातहव्यम् ।
स पुष्यत्यन्नं शतमाविरुक्थ्य३मना पिबन् प्रयतमादयित्नु ॥ १ ॥
या दंसांसि जरिता दुष्टरा वां या शंसन्ति जरितारः सुतेषु ।
यानीह पुष्यन्तु विधा जनेषु यैरश्नुथो विदथे सोमपेयम् ॥ २ ॥
यदुशन्ता वृषणा या दधीचे शिरो भिषजा समधत्तमर्वाक् ।
तद्वां मती मधुना तं युवाना वषट्कृतं भसथो मन्दसाना ॥ ३ ॥
मा वोच आथर्वण यद् ब्रवीमि मधु तेऽन्यैर्वीरतरैरचित्तम् ।
यदन्वशासन् मघवा दधीचं तद्वामवक्षच्छिरसा हयस्य ॥ ४ ॥
यदा गच्छाद्वीळितो वज्रबाहुर्धत्ते पितृभ्या मधु नो दधीचा ।
आ तिरेयं दुश्श्रुते मा वदेति यदा वदत्सा युवयोः सुकीर्तिः ॥ ५ ॥
याभिः शचीभिर्वृषणा दधीचं याभिस्तुरं कावषेयं मखस्य ।
याभिर्धियं जिन्वथार्के निपाना ताभिर्नोऽवतं विदथे गभीरा ॥ ६ ॥

२. **यैरश्नुथो**; येरश्नथो–का । ३[१]. **दधीचे शिरो** ≐ ऋसं १.११७.२२ : दधीचेऽश्व्यं शिरः → ऋसं १.११६.१२; शब्रा १४.१.१.१८-२५ । ४[२]. → ऋसं १.११६.१२[२]: यन्मध्वाथर्वणो वामश्वस्य

शीर्ष्णा प्र यदीमुवाच;→ऋसं १.११७.२२। ५. **पितृभ्यां**–का; पितृभ्यो ? **दुश्शुते मा वदेति**–का; दुःश्रुता मा वदाति ? ६. **याभिः शचीभिर्वृषणा** ≡ ऋसं १.११२.८. **तुरं कावषेयं**→शब्रा ९.५.२.१५; १०.६.५.९; ऐब्रा ४.२७; ७.३४; ८.२१; बृउ ६.५.४।

१०

अयं सोमो देवया वां सुमेधा हृदिस्पृग् याति धिषणां मियानः ।
स्वादिष्ठो हव्यान्मधुनो घृताद्वा नूत्नो वां स्तोमो अश्विनाहमेमि ॥ १ ॥
प्र वां मही मन्दते देवकामा ययैरयासो वयुनानि विश्वा ।
तावश्विना पुरुभुजा सुशस्ती ऋषिहिता मंहतं विश्ववेनाम् ॥ २ ॥
यो वां गोमानश्ववान् सूनृतावान् पुरुश्चन्द्रं स्पार्हो स्पार्हयिष्णुः ।
यं जोहवीमि रथिरो गविष्ठो तमह्वे रथमा विश्वरूपम् ॥ ३ ॥
सुवृद्रथो वां वृषणा सुवह्निः पुरुस्पृहो वसुविद्वो वयोधाः ।
येन वाजान् वहतं स्पार्हवीरानुरुश्रियः शुरुधोऽश्वांश्च माध्वी ॥ ४ ॥

२¹. **ययैरयासो**–का; ययेरयासो ? **वयुनानि विश्वा** ≡ ऋसं १.१५.१०; ७५.१४। ४¹. **सुवृद्रथो** ≡ ऋसं १.१८३.२.

११

इदं देवा भागधेयं पुराणं यदाशिरे हविता यज्ञियासः ।
एष स्य घर्मः परिपूत ऋग्भिस्तं बप्सथो रथिरा विद्वन्ता ॥ १ ॥
वृक्णं शिरो वृषणा यन्मखस्य शिरो भिषजा समधत्तमर्वाक् ।
तद्वां नरः सरिरं चारु चित्रं सदा गृणन्ति कवयः सुतेषु ॥ २ ॥
येन देवा अघ्नत सं रपांसि येनासहन्त पृतना अदेवीः ।
येनाभवन्नमृताः सोमधानं तमर्पयतं शिरसा हयस्य ॥ ३ ॥
पुरा विशीर्ष्णा विदथेन देवा नावाशिषोरुन्धत नोपि नाकम् ।
ईजाना बह्वीरु समा यदास्य शिरो दत्तं समधान्वारुहन् स्वः ॥ ४ ॥
यद्वां माता उप आतिष्ठदुग्रं सुवृद्रथानव्यथेयं सरण्यूः ।
तत्र वां माध्वी मध्वाहितं सुनीथं प्रत्नमश्विना मयोभु ॥ ५ ॥
युवं त्रिभिश्चितयथोऽपि नाकं युवं पयांसि शक्करीषु धत्तम् ।
युवं वीरुद्भिः सृजतं महीमं युवं सर्तवे सृजतं वि सिन्धून् ॥ ६ ॥
युवं माध्वी मधुभिः सारघेभिर्युवं भेषजा स्थो भिषजा सुपाणी ।
युवं रथेभी रथिरै स्थ उग्रा सुमङ्गलावमीवचातनेभिः ॥ ७ ॥
तन्मे दत्तं चक्षुरक्षणोर्विचक्षे पश्यामो येन स्वरिमा दिशश्च ।
येनाभिख्याय वि धवाम शक्रं दुर्हणाद्वामश्विना शूरसातौ ॥ ८ ॥

**२**[२]. →ऋसं १०.१७१.२; खिल १.९.३[१]। **३**[२]. **शिरसा हयस्य**≡खिल १.९.४[२]। **४**[१]. →शब्रा १४.१.१.१८; १४.२.१.११; ४.१.५.१३-१८; ऋसं १.११६.१२. **वद्धीरु समा**≡ऋसं १०.१२४.४। ५[१]. **सरण्यूः**≡ऋसं १०.१७.२; अथर्व १८.२.३३। ६[२]. **सर्तवे सृजतं वि सिन्धून्**→ऋसं १.३२.१२; २.१२.१२।

१२

आश्विना वहतं पीवरीः स्वधाश्वावतीर्दासपत्नीरिरावतीः ।
युवोर्दानासो दिवि नादितेयो युवोः पयांसि रुरुचिरे सुशुक्रा ॥ १ ॥
यद्रेभं दस्रा विनिगूळ्हमप्सु युवायन्तं वाजयन्तमृबीसात् ।
उन्निन्यथुरश्विना वध्रिमाशु तद्वां व्रतं महयन्त्युक्थशासः ॥ २ ॥
या वां नु सरिरे या पृथिव्यां या वीरुत्सु ग्रावसु यान्तरिक्षे ।
या वीरेषु सूरिषु यापि नाके ताभिर्नः शर्म यच्छतं युवाना ॥ ३ ॥
यो वां भरित्रा स्तुवतो मघानि प्रयन्त्रीणि द्विषतो बर्हणानि ।
त्रात्रीणि शश्वतां सातपन्ति ताभिर्नः शर्म यच्छतं युवाना ॥ ४ ॥
यो वां त्रिचक्रः सुपविः सुशस्तिस्त्रिवन्धुरः केतुमान् वातरंहाः ।
योगे यस्य वि तनोत्यभीशु विभावरीः सदथो यन्मयोभु ॥ ५ ॥
युवमूहथुर्विमदाय जायां युवं वशां शयवे धेनुमक्रताम् ।
युवमायुषा तारयतं प्र वन्धनमत्रिममुक्तं युवमंहसो वि ॥ ६ ॥
हवन्तं मेषान् वृक्ये शिवायै पिता चकार ऋषिमन्धमश्विना ।
तस्मिन्नृज्राश्वे चक्षुषी अधत्तमाविष्कृणुतं पुनरस्य लोकम् ॥ ७ ॥
यद्वां चक्षुर्दिवि यत्सुपर्णो येन पश्यथो भुवनान्यमर्त्याः ।
तन्मे दत्तं चक्षुषी देवबन्धू नमस्यां विन्देथ पुरुधा चकानाम् ॥ ८ ॥

**उपप्रयन्तो अध्वरम्०** ॥ ऋ. सं. १. ७४. १

इत्यृग्वेदे खिले प्रथमोऽध्यायः ।

'उपप्रयन्तो अध्वरम्' ( ऋसं १.७४.१ ) इति सूक्तान्तेन ज्ञायते यद्द्वितीयादिद्वादशपर्यन्तान्येकादश सौपर्णसूक्तानि ऋसं १.७३ अन्ते पठितव्यानीति ।

**१**[१]. **वहतं पीवरीः**≡ऋसं ८.५.२०. **नादितेयो**–का; नादितेया ? **२**[१]. ≐ऋसं १०.३९.९ युवं ह रेभं वृषणा गुहा हितमुदैरयतं……। युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः. **रेभं**→ऋसं १.११६.२४; ११७.४; ११८.६। **३. ताभिः**–का; तेभिः ? **४. यो**–का; या ? **त्रात्रीणि शश्वतां** ≡खिल ४.७.२[२]। **६. युवमूहथुर्विमदाय जायां**≐ऋसं १.११७.२० : युवं शचीभिर्विमदाय जायां न्यूहथुः. **शयवे धेनुं**≡ऋसं १०.३९.१३; ≐ऋसं १.११८.८. **आयुषा तारयतं प्र बन्धनं**≐ऋसं १.११९.६ : प्र दीर्घेण वन्दनस्तार्यायुषा. **अत्रिममुक्तं युवमंहसो**≐ऋसं १.११७.३ : अंहसः….. अत्रिं मुञ्चथो। **७. पिता चकार ऋषिमन्धं**≐ऋसं १.११६.१६ : मेषान् वृक्ये……पितान्धं चकार; मेषान् वृक्ये–ऋसं १.११७.१७. **ऋज्राश्वे चक्षुषी**≡ऋसं १.११७.१७[२]। **८. सुपर्णो**–का; सुपर्णौ ? **अमर्त्याः**–का; अमर्त्या ? **विन्देथ**–का; विन्देथे ?

## द्वितीयोऽध्यायः

ॐ मैका भद्रं पञ्चानुष्टुभो जागर्ष्येका जातवेदस्यं **स्वस्त्ययनं** द्वे वर्षन्त्वेका हिरण्यवर्णामेकोना श्रीर्भार्गवी श्रीरलक्ष्मीघ्नं श्रैय्यमानुष्टुभं वै शक्रयन्तं हिंसाग्नेयी चतुर्थी प्रस्तारपङ्क्तिस्त्रिष्टुभौ पञ्चदश्युपरिष्टाद्बृहती श्रीः[१] पुत्राः[१] परे षट् चिक्रीतः पञ्चानन्दकर्दमौ वैश्वदेवं मयि श्लेषः श्लेषो जातवेदस्यं बृहत्यादि सं स्रवन्त्विति संस्रवान् वैश्वदेवं द्वितीयादि त्रिष्टुभौ आ ते सप्त प्रजावान् गर्भार्थाशीस्तुतिः[२] प्रजापतिरैन्द्रवायव्यौ चतुर्थी बृहती पञ्चमी प्रस्तारपङ्क्तिरग्निः पञ्च जीवपुत्र आग्निवारुणमतिजगत्यानुष्टुप्[३] त्रिष्टुबन्तं चक्षुरेकात्मस्तुतिः शंवतीः षट् शान्तिरानुष्टुभं पञ्चम्यादि बृहती जगत्यौ स्वप्नेका यस्योपानुष्टुप्[४] वालखिल्याः परेऽष्टौ[५] ।

१. 'श्रीपुत्राः' इति साधु;→बृहद्दे ५.९१.

२. 'आशीःस्तुतिः' इति शुद्धं.

३. आग्निवारुण°–Macdonell, Bṛhad. Part II, p. 190; अग्निवारुण°–Scheftelowitz

४. उप ( प्र वद ) इत्यस्या ऋषिर्वसिष्ठ इति निरु. ९.७

५. 'वालखिल्याः परेऽष्टौ' इति वस्तुतस्तृतीयाध्यायं समन्वैति

---

### १

मा बिभेर्न मरिष्यसि परि त्वा पामि सर्वतः ।
घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ॥ १ ॥
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः० ॥ ऋ. सं. २. १. १

प्रथममण्डलान्ते पठनीयम् । ऋसं १.१९१.१० अन्ते पठनीयमिति मु ।

मॅ२–मु–आउ२–अल–जुना–ऋमं–ऋव्र ( शान्तिपाठ )–पञ्चामृ–आश्वमंसं–औंध ।

**१. मा बिभेर्न मरिष्यसि** ≡ अथर्व ५.३०.८ । १[२]. ≡ अथर्व १०.४.९. **अहिं**–का–मु–अथर्व; अहं–मॅ–आउ–अल–ऋमं–ऋव्र–पञ्चामृ ।

मॅ–आउ–अल–ऋमं–ऋव्र–पञ्चामृ–पुस्तकेषु बहवो मन्त्रा अस्मिन्सूक्तेऽधिकत्वेनोपलभ्यन्ते पाठवैषम्येण । ऋमं–पाठोऽधो दीयते–

आदित्यरथवेगेन विष्णोर्बाहुबलेन च । गरुडपक्षनिपातेन भूमिं गच्छ महायशाः ॥ २ ॥
गरुडस्य जातमात्रेण त्रयो लोकाः प्रकम्पिताः । प्रकम्पिता मही सर्वा सशैलवनकानना ॥ ३ ॥
गगनं नष्टचन्द्रार्कं ज्योतिपं न प्रकाशते ।
देवता भयभीताश्च मारुतो न प्लवायति मारुतो न प्लवायत्यों नमः ॥ ४ ॥
भो सर्प भद्र भद्रं ते दूरं गच्छ महायशाः । जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥ ५ ॥
आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्तते । शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥ ६ ॥
अगस्त्यो माधवश्चैव मुचुकुन्दो महामुनिः । कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥ ७ ॥
नर्मदायै नमः प्रातर्नर्मदायै नमो निशि । नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥ ८ ॥
यो जरत्कारुणा जातो जरत्कन्यां महायशाः । तस्य सर्पोऽपि भद्रं ते दूरं गच्छ महायशाः ।
तस्य सर्पस्य सर्पत्वं तस्मै सर्प नमोऽस्तु ते ॥ ९ ॥

आउ–पुस्तके १–६ मन्त्राः । मु–पुस्तके सप्तमो मन्त्रो नास्ति । अल–पञ्चामृ–पुस्तकयोः केवलं १-४ मन्त्राः ।

२. **विष्णोर्बाहु°**–ऋमं–ऋत्र–पश्चामृ; विष्णुबाहु°–मॅ–मु–आउ–अल. **निपातेन भूमिं**; भातेन भूमीं–अल. **महायशाः**; महाविषः–अल। ३·४[१] ≡ सुप २.१-२. ३[१]. **जातमात्रेण**–मॅ–मु–आउ–ऋमं–ऋत्र–पश्चामृ; जातमात्रस्य–अल–सुप; पातमात्रेण–औंध। ४[१]. **ज्योतिषं न प्रकाशते**; न ज्योतींषि चकासति–सुप। ४[२]. अल–सुप–पाठौ भिन्नौ। अल–देवता भयवित्रस्ता मारुतो नष्टचेतनाः; सुप–देवता भयवित्रस्ता नष्टशेषश्च मारुतः. **भयभीताश्च**; भयवित्रस्ता–आउ। ५. **भो**–का; भोः–इतरेषु. **महायशाः**; महाविष–आउ–औंध. **जनमेजयस्य**–ऋमं–मॅ–मु; जन्मेजयस्य–आउ–ऋत्र–पश्चामृ। ५-६ ≡ मभा १. ५३. २२ ( टिप्पणी )। ७. ≡ मॅ ९. **अगस्त्यो माधवः**–ऋत्र; अगस्त्यं माधवं–ऋमं–पश्चामृ; अगस्तिर्माधवः–मॅ. **मुचुकुन्दो**; मुचकुंदं–पश्चामृ. ७[२]. = तं : श्वफल्कमास्तिकं चैव पंचैतानि स्मरेन्निशि पंचैतानि स्मरेन्निश्यों नमः। ८. = मॅ १०। ९. = मॅ ७. **जरत्कन्यां**; जरत्कार्वां–औंध. **सर्पोऽपि**–ऋमं–ऋत्र; सर्पाप–मॅ; सर्पापि–मु; स्मराभि–औंध. **दूरं**; भूमिं–मॅ. **महायशाः**; महाविष–औंध। ९[२]. ( केवलं ऋमं–मध्य एव वर्तते ) ≡ खिल २. १४. ८[२].

अधोलिखितः मॅ ८ मन्त्रः ऋमं–पुस्तके नास्ति—

असितिं चार्थसिद्धिं च सुनीतिं चापि यः स्मरेत् ।
दिवा वा यदि वा रात्रौ नास्ति सर्पभयं हरेत् ॥

---

अधोलिखितं खिलसूक्तं ऋसं २. ३२ अनन्तरं पठनीयमिति औंधपुस्तके—

कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥ १ ॥
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।
सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातु ॥ २ ॥
अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥ ३ ॥
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषत् ॥ ४ ॥
धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ ५ ॥
धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे ।
तस्मै देवा अमृताः सं व्ययन्तां विश्वे देवासो अदितिः सजोषाः ॥ ६ ॥
धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिं वाजिनीवतः ॥ ७ ॥
धाता प्रजानामुत राय ईशे धातेदं विश्वं भुवनं जजान ।
धाता कृष्टीरनिमिषाभि चष्टे धात्र इद्धव्यं घृतवज्जुहोत ॥ ८ ॥

एतस्मिन् विषये बृहद्देवतावचनम् ( ४. ८७-८८ )—‘ तत्पूर्वे द्वे ऋचौ कुह्वाः कुहूमहमिति स्मृते । तदुत्तरे द्वेऽनुमतेरनु नोऽन्विदिति स्मृते । धातुश्चतस्रस्तत्रादौ धाता ददातु नो रयिम् ॥ ’ एतेनैव क्रमेण तैत्तिरीयसंहितायां ( ३. ३. ११ ) कुहूमहमित्यादिसूक्तगताः सर्वे मन्त्रा उपलभ्यन्ते। प्रथमं ५-८ इति धातृदेवताकाश्चत्वारो मन्त्राः ५, ८, ७, ६ इति क्रमेण वर्तन्ते । अनन्तरं ३, ४ इति अनुमतिदेवताकौ मन्त्रौ तदनन्तरं ऋसं. २. ३२.४-५ एतौ राकाया मन्त्रौ वर्तेते। समनन्तरमेव १, २ इति कुहूदेवताकौ मन्त्रौ समागतौ ( तैसं ३. ३. ११. ५ )। किंत्वयं सार्धश्लोकात्मकोंऽशो बृहद्देवतायाः सर्वेषु लिखितपुस्तकेषु नास्ति। अतः तस्य मूलपाठत्वं शङ्कास्पदम्[1]। काश्मीरखिलग्रन्थ इदं सूक्तं नास्ति। औंधपुस्तकस्थो मन्त्राणां क्रमः तैसं-क्रमाद्भिन्न एव। इदं सूक्तं ऋसं २. ३२ अनन्तरं

---

1. Cf. Scheftelowitz, p. 25. A. B. Keith considers the Bṛhaddevatā verses as original, Comp. JRAS 1907, p. 229.

२

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात् कपिञ्जल ॥ १ ॥
भद्रं वद पुत्रैर्भद्रं वद गृहेषु च । भद्रमस्माकं वद भद्रं नो अभयं वद ॥ २ ॥
भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद । भद्रंभद्रं न आ वद भद्रं नः सर्वतो वद ॥ ३ ॥
असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि । अभयं सततं पश्चाद्भद्रमुत्तरतो गृहे ॥ ४ ॥
यौवनानि महयसि जिग्युषामिव दुन्दुभिः । शकुन्तक प्रदक्षिणं शतपत्राभि नो वद ॥ ५ ॥

**आवदंस्त्वं शकुने भद्रमा वद०** ॥ ऋ. सं. २. ४३. ३

ऋसं २. ४३. २ अनन्तरं पठनीयम् । मॅ–मु–औंध-मते द्वितीयमण्डलान्ते पठनीयम् । मॅ–औंध-पुस्तकयोः खिलान्ते 'आवदंस्त्वम्' (ऋसं २.४३.३) इति मन्त्रः संपूर्णः पठितः । आश्वमंसं[१]–पुस्तके द्वितीयमण्डलान्ते 'भद्रं वद दक्षिणतः' इति मन्त्रं पठित्वानन्तरं 'अथ परशिष्टम्' (पदशिष्टं अथवा परिशिष्टं ?) इत्युक्तम् । एतद्ग्रन्थकर्तृमते प्रथमो मन्त्रः ऋसं. २. ४३ मध्ये समाविष्टः खिलसूक्तं च द्वितीयमन्त्रादारब्धम् । आश्वमंसं[२]–मध्येऽस्य सूक्तस्य चत्वारो मन्त्राः—१, ३[२] + ४[१], ४[२] + ५[१], ५[२], ऋसं. २. ४३. ३.

मॅ३–मु–आउ३–ऋमं–ऋव्र–औंध–आश्वमंसं–अल–जुना ।

**१.** = निरु ९. ५. **कपिञ्जल**; कपिंजर–ऋव्र. **१. २. ५.** → कौसू ४६. ५४. । **२[२]. अस्माकं**; अस्माकं नो–मु–ऋव्र. **अभयं वद**; अभयं कृधि–ऋव्र । **३[२]. आ वद**; आ भर–ऋव्र । **४[१]. असपत्नं**; असपत्नः–मु ।

३

जागर्षि त्वं भुवने जातवेदो जागर्षि यत्र यजते हविष्मान् ।
इदं हविः श्रद्दधानो जुहोमि तेन पासि गुह्यं नाम गोनाम् ॥ १ ॥

**विदा दिवो विष्यन्नद्रिमुक्थैः०** ॥ ऋ. सं. ५. ४५. १

ऋसं ५.४४ अनन्तरं पठनीयम् ।

मॅ४–आउ४–मु–ऋमं–आश्वमंसं–अल–जुना ।

**१[२]. तेन पासि गुह्यं नाम गोनाम्** = ऋसं ५. ३. ३.

मॅ५–मु–अल–औंध–अनुसारेण ऋसं ५. ४९ अनन्तरमधो लिखितं खिलं पठनीयम्–

सूक्तान्ते तृणान्यग्नावरण्ये वोदकेऽपि वा । यस्तृणैरध्ययनं तदधीतं स्तृणानि भव ते भव ॥ १ ॥
वापीकूपतडागानां समुद्रं गच्छ स्वाहाग्निं गच्छ स्वाहा ॥ २ ॥

---

पठनीयमिति यदुक्तं तदपि तैसं–पाठेन सम्यक्तया न समन्वैति । औन्धपुस्तक इदं सूक्तं केवलमभ्यूहमात्रेणैव स्वीकृतमिति तत्पुस्तकसंपादकैरावेदितम् । आश्वश्रौ१.१०; ४.१२; ६.१४ द्रष्टव्यम् ।

**१-२.** ≐ अथर्व ७. ४७. १,२. **३-४.** ≐ अथर्व ७. २०. १,२; → खिल ३. १५. ३. ५, ६, ७. ≐ अथर्व ७. १७. १, ३, २; → खिल ३. १५. २.

**१. सुवृतं**; सुभगां–तैसं. **पितृणां**; पितृणां–तैसं. **तस्यै ते**; तस्यास्ते–तैसं । **२. हविषः शृणोतु**; हविषश्चिकेतु–तैसं. **यजमाने**; चिकितुषे–तैसं । **३. भवतं**; भवतां–तैसं । **४. नस्कृधि**; नः कृधि–तैसं. **तारिषत्**; तारिषः–तैसं । **५. दधातु**; ददातु–तैसं । **७. दाशुषे**; नो रयिं–तैसं. **वाजिनीवतः**; सत्यराधसः । **८. प्रजानामुत**; प्रजाया उत–तैसं. तैसं–मध्ये उत्तरार्धः सर्वथा भिन्नो वर्तते–धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम ।

अनुभा ५. ४९; ऋग्वि २. २२. ३ द्रष्टव्यम्। १[१]. सूक्तान्ते तृणावम्नावरण्ये वोदके पिबा–अल; सूक्तान्तेऽस्येत्तृणान्यम्नाविरिणे वोदकेऽपि वा–औंध. १[२]. यस्तृणै°–अल; यदस्तृणैरधीतं तत्तृणानि भवति ध्रुवं–औंध। २. 'अग्निं गच्छ स्वाहा' मु–पुस्तके नास्ति।

४

स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम्।
असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवा रुहेम ॥ १ ॥
अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम्।
प्रयतपाणिः शरणं प्र पद्ये स्वस्ति संबाधेष्वभयं नो अस्तु ॥ २ ॥

**प्र श्यावाश्व धृष्णुया०** ॥ ऋ. सं. ५. ५२. १

ऋसं ५. ५१ अनन्तरं पठनीयम्। आश्वगृ ३. ११. २ भाष्यमपि द्रष्टव्यम्।

मॅ६–मु–आउ५–ऋमं–ऋव्र ( शान्तिपाठ )–औंध–आश्वमंसं–अल–जुना–सुप१०. ५-६।

१. **स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं**; स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः–नृताउ १. १; प्रर ( पुण्याह )· महद्भूतं; महाद्भुतं–आउ. **नावमिवा रुहेम** ≡ ऋसं १०.१७८.२। २[२]. **नो अस्तु**; च नो अस्तु–आउ.

५

वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः। रोहन्तु सर्वबीजान्यत्र ब्रह्मद्विषो जहि ॥ १ ॥

**प्र सम्राजे बृहदर्चा गभीरम्०** ॥ ऋ. सं. ५. ८५. १

ऋसं ५. ८४ अनन्तरं पठनीयम्।

मॅ७–आउ६–मु–आश्वमंसं–औंध–अल–जुना। पद्मामृ–पुस्तकेऽयं मन्त्रः श्रीसूक्तस्य चतुर्विंशतितममन्त्रत्वेनागतः।

१. ≐ ऋसं ५. ८४. ३ : यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः।

६

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममा वह ॥ १ ॥
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

---

हे जातवेदः। जातानि वेद जातप्रज्ञो वा। जाते जाते विद्यत इति वा। हे अग्ने त्वं हिरण्यवर्णां हिरण्यस्य सुवर्णस्य वर्णः कान्तिस्तद्वद्वर्णो यस्यास्ताम्। हरिणीं हरितवर्णाम्। हरिणीरूपधरां वा। श्रीर्धृत्वा हरिणीरूपमरण्ये संचचार हेति देवीपुराणाच्च। सुवर्णरजतस्रजाम्। सुवर्णस्य पुष्पाणि सुवर्णानि एवं रजतस्य रजतानि तेषां स्रक् माला यस्यास्ताम्। स्रक्साहचर्यात् पुष्पाणीत्यवगम्यते। पुष्पसादृश्यात् पुष्पे फले लुक्। आपं चैव हलन्तानामित्याप्। यद्वा सुवर्णरजतविकृतशृङ्खलाम्। सुष्ठु वर्णो यस्य तत्सुवर्णं यद्रजतं तत्पुष्पस्रजाम्। तद्विकृतशृङ्खलां वा। चन्द्रां चन्द्रवत्प्रकाशमानाम्। तद्रूपेणावस्थितां वा। हिरण्मयीं हिरण्यस्वरूपाम्। हिरण्यविग्रहां वा। लक्ष्मीं लक्षणवतीम्। 'लक्ष्मीर्लाभाद्वा लक्षणाद्वा' ( निरु. ४. १० ) इत्यादिनिरुक्तात्। एवंरूपां श्रियं मे मह्यं मदर्थमा वह। आह्वय। अग्नेर्देवहोतृत्वादाह्वानं तदधीनमिति भावः। 'अग्निर्वै देवानां होता' ( ऐ. ब्रा. २. ७ ) इति श्रुतेः ॥ १ ॥

हे जातवेदः अग्ने त्वमनपगामिनीमपगमनरहिताम्। अनपायिनीमित्यर्थः। तां वक्ष्यमाणलक्षणां लक्ष्मीं मे मह्यमा वह। आह्वय। यस्यां श्रीदेव्यामावाहितायां सत्यां हिरण्यं सुवर्णं गां धेनुमश्वं वाजिनं पुरुषान् पुत्रपौत्रमित्रदासभूतानहं विन्देयं प्राप्नुयाम् ॥ २ ॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥
कांस्यस्मि तां हिरण्यप्रावारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम् ॥ ४ ॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मनेमिं शरणं प्र पद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥
आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरा याश्च बाह्या अलक्ष्मीः ॥ ६ ॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिं वृद्धिं ददातु मे॥७॥

---

अश्वपूर्वाम् अश्वाः पूर्वे पुरोगा यस्यास्ताम् । अथवाश्वपूर्णामश्वैः पूर्णाम् । परिपूर्णामिति केचित् । रथमध्यां रथा मध्ये यस्यास्ताम् । हस्तिनादप्रबोधिनीम् । हस्तिनां गजानां नादेन बृंहितेन गजपुष्करतूर्यनादेन वा प्रबोधिनीं प्रकर्षेण ज्ञापयित्रीम् । देवीं देवनशीलाम् । द्योतनशीलां वा । श्रियं श्रयणीयाम् । सेनारूपां वा । उप ह्वये समीपं प्रत्याह्वये । एतादृशी देवी श्रीर्मा मां जुषतां सेवताम् ॥ ३ ॥

कां वाङ्मनसयोरगोचरां दुर्निरूपस्वरूपामित्यर्थः । ब्रह्मरूपां वा । को ह वै नाम प्रजापतिरिति श्रुत्यन्तरात् । क इति ब्रह्मणो नामेति पुराणाच्च । सोस्मिताम् । आ ईषदुद्गतं स्मितं हास्यं तद्युक्ताम् । उपान्त्यलोपश्छान्दसः । हिरण्यप्राकारां हिरण्यस्य सुवर्णस्य प्राकार आवरणं यस्यास्ताम् । हिरण्यप्रकृष्ट आकार आकृतिर्यस्यास्तामिति वा । आर्द्रां क्लिन्नां क्षीरोदधेरुत्पन्नत्वात् । रुद्ररूपां वा । रुद्रशब्दोऽत्रामूर्धन्यस्वरादिः । आर्द्रया रुद्र इत्यादौ तथा दर्शनात् । अन्यद्बाहुलकम् । ज्वलन्तीं प्रकाशमानाम् । तृप्तां प्रीतामपि च तर्पयन्तीं भक्तान् मनोरथैरिति शेषः । पद्मेस्थितां कमले निषण्णामासीनाम् । पद्मवर्णां कमलवर्णाम् । तामिति प्रसिद्धां श्रियमिहोप ह्वये समीपं प्रत्याह्वये ॥ ४ ॥

अत्र प्र पद्य इत्यस्यानन्तरमहंशब्दप्रक्षेपः प्रामादिकः । चन्द्रां चन्द्रवत् प्रकाशमानां प्रभासाम् । प्रकृष्टा भाः कान्तिर्यस्यास्ताम् । आर्षं चैवेत्याप् । यशसा कीर्त्या ज्वलन्तीं प्रकाशमानाम् । लोके स्वर्लोके देवजुष्टां देवैरिन्द्राद्यैर्जुष्टां सेविताम् । प्रीतां वा । उदारां वदान्यां प्रगल्भां वा । पद्मिनीं पद्मलतारूपाम् । पद्माकारां वा । ईमिति निपातोऽनर्थकः । 'मिताक्षरेष्वनर्थकाः कमीमिदु' ( निरु. १. ९ ) इति यास्कवचनात् । ईकारवाच्यां वा । तां श्रियं लोक इह लोके शरणं रक्षित्रीं प्र पद्ये प्रपन्नोऽस्मि । अहमिति शेषः । अतो हे श्रीः मे ममालक्ष्मीरश्रीर्नश्यतां नाशं प्राप्नोतु । एतादृशीं त्वां वृणोमि । शरणत्वेन स्वीकुर्वे ॥ ५ ॥

वृक्षोऽथेत्यन्तःपादमपि पूर्वरूपं बाहुलकात् । आदित्यवर्णे । आदित्यस्य सूर्यस्य वर्ण इव वर्णो यस्यास्तस्याः संबोधनम् । हे श्रीः तव तपसः नियमाद्धेतोर्वनस्पतिः । 'अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः' ( मनु. १. ४७ ) इति मानवस्मरणात् । बिल्वः बिल्वनामको वृक्षो द्रुमोऽधिजातः प्रादुर्भूतः । त्वत्करादिति शेषः । 'कात्यायन्याः शमी जाता बिल्वो लक्ष्म्याः करेऽभवत्' इति वामनपुराणात् । अथानन्तरं तस्य बिल्वस्य फलानि पक्वशलाटुकानि तपसा त्वत्तपसा । त्वदनुग्रहेणेत्यर्थः । अन्तरा अन्तरिन्द्रियसंबन्धिनी माया अज्ञानं तत्कार्याणि च बाह्या बहिरिन्द्रियसंबन्धिन्यो यास्ता अलक्ष्मीरश्रियो नुदन्तु अपनुदन्तु । निवारयन्त्वित्यर्थः ॥ ६ ॥

हे श्रीः देवसखः देवो महादेवस्तस्य सखा कुबेरः । कीर्तिः कीर्त्यभिमानिनी दक्षकन्या देवता । कुबेरकोशशाला वा । सा च मणिना चिन्तामणिना मणिभद्रेण कोशाध्यक्षेण वा सह सार्धमुपैतु उपगच्छतु । अहमस्मिन् राष्ट्रे जनपदे प्रादुर्भूतोऽस्मि । उत्पन्नोऽस्मि । स आगत्य कीर्तिं यशः कोशं वा ऋद्धिं सर्ववस्तुसमृद्धिं मे मह्यं ददातु यच्छतु ॥ ७ ॥

